# GÂDÂDHARÎ-PAÑCHALAKSHANÎ



CONTAINING THE FIVE NYAYA WORKS,

Chintâmani, Didhiti, Gâdâdharî, Krishnambhattiya, and Nyâyaratna.

---

WITH AN APPENDIX,

SÂRVABHAUMA-PARISHKÂRA.

---

EDITED BY

TARKA-VÂCHASPATI BHIMÂCHÂRYA OTTANGÂDKAR.



PUBLISHED BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF "NIRNAYA-SÂGAR" PRESS,

BOMBAY.

---

1919.

---

*Price* 1½ *Rupees.*

॥ श्रीः ॥

# गादाधरीपञ्चलक्षणी ।

चिन्तामणि–दीधिति–गादाधरी–कृष्णंभट्टीय-
न्यायरत्नेति न्यायपञ्चग्रन्थीसंग्रहः ।

सिंहव्याघ्रलक्षणसार्वभौमपरिष्कारोपेतः ।

अयं

तर्कवाचस्पतिबिरुदमण्डितविद्वद्वर-
भीमाचार्यओट्टंगाडकरइत्येतैः

संशोधितः ।

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितः ।

शाके १८४१, सन १९१९

मूल्यं १॥ सार्धो रूप्यकः ।

श्रीगुरुभ्यो नमः ।

# विज्ञप्तिः—

अथोपक्रम्यते—रघुनाथभट्टाचार्यतार्किकशिरोमणिकृतशिरोमण्य-परनामकदीधितिटीकां गदाधरभट्टाचार्यचक्रवर्तिप्रणीतां संगतिनाम्नीं **गादाधरीं** मुद्रयित्वा प्रकाशयितुम् । इयं हि वाराणस्यां ह्रैसुरनगरे च अन्यैः कैश्चिदेकैकमेव पुस्तकमालम्ब्य मुद्रितेति । यतस्तदीय-टिप्पणीकृष्णंभट्टीयादिषु गृहीतवाक्यानां कुत्रचिदभावः पाठान्तरा-भावश्च पूर्वोक्तशङ्कां द्रढयतः । किंच तत्रतत्र केवलं गादाधरी कुत्रचित् एकविधा टिप्पणी अन्यत्र च भिन्नेति विशकलय्य मुद्रि-तास्ति । तदेतदालोच्याध्यापकाध्येतृसौकर्याय नानादेशस्थबहुल-पुस्तकावलम्बनेन सुपरिशुद्धपुस्तकप्रकाशनकामैर्निर्णयसागरमुद्रणा-लयप्रधानविद्वद्वर्यैः **पणशीकरोपाह्व—वासुदेवशास्त्रिमहोदयैरेत**-न्मुद्रापणाय सन्नियुक्तः तैरेव महाशयैः प्रदत्तं मुद्रणालयग्रन्थभा-ण्डागारस्थमेकं पुस्तकमलभे । तत्पुस्तकान्ते च काश्यां लिखितमिति वर्तते । परंतु तत्र लेखकानवधानजनितानुपयुक्तासमतार्थपाठभेद-प्रदर्शनं विद्वद्वायासफलकं मन्यमानेन मया तदेव न सर्वत्रोपयोजितम् । तदनु प्रवृत्ते परिशुद्धपुस्तकान्वेषणे 'सातारा'नगरनिवासिनां विद्वद्वर-गजेन्द्रगडकरोपाह्व—**बाळाचार्याणां** परंपरागतं परिशुद्धं संपूर्णं जीर्णं चैकं पुस्तकमासादितम् । यत्प्रतिलिपिर्मुद्रणार्थमुपायोज्यत । **अपरंच 'नडियाद'** नगरपुस्तकभाण्डागारस्थं **तनसुखराममहाशयै**-रानाय्य दत्तं नातिशुद्धं प्राचीनं सिंहव्याघ्रलक्षणान्तं च । अन्यच्चा-स्मदीयं परम्परागतं परिशुद्धं चतुर्थादर्शपुस्तकम । किंच मुद्रितपुस्त-कद्वयं । एवं सदीधितिगदाधर्याः षडादर्शपुस्तकान्यासादितानि । अथ च तट्टीकान्वेषणकाले तैरेव गजेन्द्रगडकरोपाह्व—बाळाचार्य-महाशयैः पञ्चलक्षण्याः **कृष्णंभट्टी**, तथा आसार्वभौमपरिष्कारं न्यायरत्नटीका च दत्ता । तयास्मदीयं शुद्धं टीकापुस्तकद्वयं च मुद्रणायोपयुक्तम् । किंच तनसुखराममहाशयदत्ता सिंहव्याघ्रलक्षण-पर्यन्ता न्यायरत्नटीका च । अपरा मुद्रित-कृष्णंभट्टीटीका, तथा

मुद्रित-न्यायरत्नटीकाद्वयं चेति टीकायाः पञ्चादर्शपुस्तकानि लब्धानि । तत्र अस्मदीयपुस्तकस्थपाठस्य बालाचार्यपुस्तकपाठस्य च परस्परं भेदः प्रायशो न दृष्टः । अन्यान्यपुस्तकपाठान्तराणि तु तत्रतत्र दत्तान्येव ।

महासागरायमाणगादाधरीप्रवेशनौकायमानपञ्चलक्षणी–सिंहव्याघ्रादिग्रन्थस्थानामनेकवारं तत्रतत्र प्रयुक्तानां विषमपदानां परिष्कारकरणे व्याकरणनिष्णातगजेन्द्रगडकरोपाह्वसेतुमाधवाचार्यमहाशयैः प्रेरितेन तथा तैरेव विरचितानुकूल्येन संशोधनादिकर्मणि बद्धपरिकरैः पणशीकरवासुदेवमहाशयैः समेधितोत्साहेन मया विषमपदानां तत्तत्स्थलानुकूलतया छात्रचित्तसर्वसाधारणतया च परिष्काराः कृतास्ते चान्ते संयोजिताः सन्ति । विशेषितश्च विषयसूचीक्रमः प्रारम्भे ।

इत्थं सर्वसाहित्यसमेलनपुरःसरं समारब्धं मुद्रणमस्माभिः । अत्रान्तरे च संस्कृतभाषोद्धरणबद्धकक्षाः निर्णयसागरमुद्रणालयाध्यक्षाः श्रीमन्तः तुकारामश्रेष्ठिश्रेष्ठाः निष्कारणवैरिणा प्रकृतिकुटिलेन दैवदुर्विलसितेन करालकालपरिपाकप्रसृमरव्याधिना स्वर्लोकमितो नीताः । न जाने कियन्ति वा निष्कारणमेतद्कारणमाधिनिपतते भारतवर्षे विधात्रेति । यदनेन प्रत्यहमेव करालकालवदनकुहरे समर्प्यन्ते तानि तानि भारतवर्षीयाणि जगदुपकृतिपराणि रत्नानि । शोचामशेषा निपतनेन भगवत्या. लोकसमोल्लसितमात्रायजितजीवितायाः गीर्वाण्या भाष्या दुर्भागधेयविलसितानि । यो नयनालङ्कृतेन पदेन श्रीमत्तुकारामश्रेष्ठिमहाभाग सद्गतिस्ते दिव्यतेति समाप्र्यतेऽस्माभिः । अनन्तरं च तत्स्थानापन्नैस्तत्सूनुभिः श्रीपाण्डुरङ्गश्रेष्ठिवर्यैः पुनः प्रेरितं कार्यमस्मदीयम् । सदैव महान्तमायासमनुभूय सम्पादितमिदं कार्यं गादाधरीकुतूहलायाः गुम्फितसत्त्वा सन्मतिप्राप्त्येन श्रीमत्काशीश्वरयोः कटाक्षेण च गुम्फानि सरणिगानि श्राम्यन्तो गुम्फितानि शास्त्ररसिका आस्वादयन्तु शर्मानन्दं प्राप्नुवन्तु श्रमाः समागमेनमनुभव प्रमोद प्रर्थातु च सर्वोपयोगी जगदीश्वरो भगवानत्र साधारण्येन नम् ॥

विद्वदनुचरो भीमाचार्यः

## शोधनसंकेतादिग्दर्शनम्—

अत्र सर्वत्र बाळाचार्यमहाशयपुस्तकपाठ एवादृत इति तदीयपाठान्तरं प्रायशो न दत्तं, परंतु यत्र कचिद्दत्तं तत्र "बा. पु." अथवा केवलं "बा. पा." इति वर्तते। अनन्तरं म्हैसूरदेशादानीतस्य मदीयपुस्तकस्य पाठभेदाः "मै. पु." इति दत्ताः। अथ च तत्सुरस्रामहाशयपुस्तकपाठाः "त. पा." इति निवेशिताः। निर्णयसागरीयग्रन्थभाण्डागारपुस्तकपाठान्तराणि "का. पा." इत्युल्लिखितानि सन्ति॥

# श्रीमद्गादाधरीपञ्चलक्षणीविषयानुक्रमणिका ॥



समाप्ता चेयं विषयानुक्रमणी ।

त्तावतिव्याप्तेर्वारणायाभावद्वये प्रतियोगिवैयधिकरण्यं बोध्यम्। हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो बोध्यः। तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम्। तेन द्रव्यत्वादौ साध्ये विशिष्टसत्त्वादौ नाव्याप्तिः। न वा विशिष्टसत्तात्वादिना बाधस्याभावप्रतियोगिनि सत्त्वादावतिप्रसङ्गः। यत्रैकव्यक्तिकं साध्यं विपक्षो वा, तत्र निर्धूमत्वव्याप्ये, तत्त्वेन साध्ये, निर्वह्नित्वादौ चाव्याप्तिः। तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह— साध्यवदिति। अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यम्। नहि भवति नीलो घटो घटादन्य इति॥ इति दीधितौ पञ्चलक्षणी समाप्ता॥

श्रीहयग्रीवाय नमः।

# तत्त्वचिन्तामणिः।

## सिंहव्याघ्रलक्षणदीधितिसहितः[1]

नापि साध्यासामानाधिकरण्यानधिकरणत्वं, साध्यवैयधिकरण्यानधिकरणत्वं वा। तदुभयमपि साध्यानधिकरणानधिकरणत्वम्। तच्च तत्र यत्किंचित्साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम्॥ इति तत्त्वचिन्तामणौ सिंहव्याघ्रलक्षणे॥

नापीति। साध्यमसमानाधिकरणं यस्य, यदधिकरणानधिकरणं साध्यं तत्त्वं, साध्यनिष्ठसामानाधिकरण्यप्रतियोगित्वम्, साध्यनिष्ठाधेयत्वनिरूपकाधिकरणवृत्तित्वमिति यावत्। तदनधिकरणत्वमित्यर्थः। साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसंगः। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः। तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः। साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणत्वं चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तमपहाय स्वयमेकोत्त्थानूद्य दूषयति—तदुभयमपीति। साध्येत्यादेः, साध्यं यदधिकरणानधिकरणं तत्त्वाभावः, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः। तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्या, नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वानिरूपकत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः। क्वचिद्व्यभिचारिण्यतिव्याप्तिश्चाद्ये[2]। द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको बोधो विवक्षितः तदा केवलान्वयिनि यदि च यत्किंचित्साध्यवद्व्यक्तिभेदः तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः॥ इति दीधितौ सिंहव्याघ्रलक्षणे॥

---

१ व्यक्तित्वा० पु० ना०। २ अधिकरणत्व का० प०। ३ प्रसङ्गः का० प०।

त्तावतिव्याप्तेर्वारणायाभावद्वये प्रतियोगिवैयधिकरण्य बोध्यम्। हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो बोध्यः। तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम्। तेन द्रव्यत्वादौ साध्ये विशिष्टसत्त्वादौ नाव्याप्तिः। न वा विशिष्टसत्त्वत्वादिना तादृशाभावप्रतियोगिनि सत्त्वादावतिप्रसङ्गः। यत्रैकव्यक्तिकं साध्यं विपक्षो वा, तत्र निर्धूमत्वव्याप्ये, तत्त्वेन साध्ये, निर्वह्नित्वादौ चाव्याप्तिः। तत्र हेत्वभावस्य वक्ष्यादेः प्रत्येकं यावद्विपक्षाऽवृत्तित्वादत आह— साध्यवदिति। अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यम्। नहि भवति नीलो घटो घटादन्य इति॥ इति दीधितौ पञ्चलक्षणी समाप्ता॥

श्रीहयग्रीवाय नमः ।

# तत्त्वचिन्तामणिः ।

## सिंहव्याघ्रलक्षणदीधितिसहितः

नापि साध्यासामानाधिकरण्यानधिकरणत्वं, साध्यवैयधिकरण्यानधिकरणत्वं वा । तदुभयमपि साध्यानधिकरणानधिकरणत्वम् । तच्च तत्र यत्किंचित्साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम् ॥ इति तत्त्वचिन्तामणौ सिंहव्याघ्रलक्षणे ॥

नापीति । साध्यमसमानाधिकरणं यस्य, यदधिकरणानधिकरणं साध्यं तत्त्वं, साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम्, साध्यनिष्ठाधेयत्वनिरूपकाधिकरणवृत्तित्वमिति यावत् । तदनधिकरणत्वमित्यर्थः । साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसंगः । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः । तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः । साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणत्वं चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तमपहाय सममेकोक्त्यानूद्य दूषयति—तदुभयमपीति । साध्येत्यादेः, साध्यं यदधिकरणानधिकरणं तत्त्वाभावः, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभाव इत्यर्थः । तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिध्या, नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वानिरूपकत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः । क्वचिद्व्यभिचारिण्यतिव्याप्तिश्चाद्ये[3] । द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितः तदा केवलान्वयिनि यदि च यत्किंचित्साध्यवद्व्यक्तिभेदः तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः ॥ इति दीधितौ सिंहव्याघ्रलक्षणे ॥

---

१ [illegible] अधिकरणत्व का. पा. । ३ [illegible] का. पा. ।

श्रीहयग्रीवाय नमः।

# तत्त्वचिन्तामणिः।

## सिंहव्याघ्रलक्षणदीधितिसहितः।

**नापि साध्यासामानाधिकरण्यानधिकरणत्वं, साध्यवैयधिकरण्यानधिकरणत्वं वा। तदुभयमपि साध्यानधिकरणानधिकरणत्वम्। तच्च तत्र यत्किंचित्साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम्॥ इति तत्त्वचिन्तामणौ सिंहव्याघ्रलक्षणे॥**

नापीति। साध्यमसमानाधिकरणं यस्य, यदधिकरणानधिकरणं साध्यं तत्त्वं, साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम्, साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमिति यावत्। तदनधिकरणत्वमित्यर्थः। साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसंगः। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः। तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः। साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणत्वं चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तमपहाय स्वयमेवोक्त्यानूद्य दूषयति—तदुभयमपीति। साध्येत्यादेः, साध्यं यदधिकरणानधिकरणं तत्त्वाभावः, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः। तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्या, नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वानिरूपकत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः। क्वचिद्व्यभिचारिण्यतिव्याप्तिश्चाद्ये। द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितः तदा केवलान्वयिनि यदि च यत्किंचित्साध्यवद्व्यक्तिभेदः तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः॥ इति दीधितौ सिंहव्याघ्रलक्षणं॥

---

१ व्यक्तिा. पु. ना.। २ अधिकरणत्व का. पा.। ३ प्रसंगः का. पा.।

# अथ दीधितौ सार्वभौमपरिष्कारः ।

केचित्तु । साध्येति । साध्यासामानाधिकरण्यं हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणे, तेनैव संबन्धेन साध्यवद्वृत्तित्वा(सा)भावस्तदधिकरणभिन्नत्वमर्थः । तेन धूमस्य स्वाश्रये संयोगेन वह्निमतिच समवायेनावृत्तावपि न क्षतिः । तादृशाभावश्च तत्रैव संबन्धान्तरेण वर्तमाने सुलभः । व्यभिचारिण(स्तु)श्च व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्वम् । सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतेः । नचैवं विशिष्टसत्वेऽव्याप्तिः । विशिष्टस्यातिरिक्तत्वात् । अनतिरेके तु विशेषणविशेष्यसंबन्धस्यैव परंपरया व्या(प्त)प्यत्वात् । केवलान्वयिनि साध्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्याहुः । तच्चिन्त्यम् । सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परंपरासंबन्धेन सामानाधिकरण्यस्य वा अभावं गुणेऽवगाहते, नतु सत्तायामेव द्रव्यवृत्तित्वाभावं । सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादिसर्वजनप्र(सिद्ध)प्रतीतिबाधितत्वात् । बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेन एकत्र प्रतीत्या तदुभयोरेकत्र प्रसिद्धिः । अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यतिप्रसंगाच्च । तत्र सामानाधिकरण्याभावस्य प्रत्यक्षासंभवेनासिद्धेः । नच तदभाववद्वृत्तित्वेन तत्र तदनुमेयं तद्वद्वृत्तिभिन्नत्वस्योपाधित्वात् । किंचेदमिदानीमिति प्रतीतिनियामकविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः । तेन संबन्धेनाधिकरणे काले तेन संबन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः ॥

इति श्रीमद्रघुनाथभट्टाचार्यशिरोमणिविरचितायां शिरोमण्याख्यतत्त्वचिन्तामणिव्याख्यायां दीधित्याख्यायां सार्वभौमपरिष्कारः

समाप्तः ॥

---

१ अनुभवत्व का. पा. २ गुण[illegible] का. पा. ३ [illegible] का. पा.

॥ श्रीः ॥

# गदाधरीपञ्चलक्षणी ।

## चिन्तामणि-दीधिति-गदाधरी-कृष्णंभट्टीय-न्यायरत्नेति न्यायपञ्चग्रन्थीसंग्रहः

### सिंहव्याघ्रलक्षणसार्वभौमपरिष्कारोपेतः ।

---

सर्वमिदं सति व्याप्तिनिश्चये स्यात् । स एव न संभवति उपायाभावादित्यत आह—व्याप्तीति ।

---

श्रीगुरुभ्यो नमः ॥ सर्वमिदम् । अनुमानप्रामाण्यव्यवस्थापकयुक्तिप्रदर्शनम् । व्याप्तिनिश्चये सतीत्यन्वयः ॥ स एव व्याप्तिनिश्चय एव । न संभवति नोत्पत्तुमर्हति । उपायाभावात्

कृष्णंभट्टीयं ।

श्रीः ॥ चार्वाकेण धूमत्वावच्छेदेनैवाप्रामाण्यं साधनीयं न तु तत्सामानाधिकरण्येन सिद्धसाधनप्रसङ्गात् । एवंच नैयायिकेनापि तन्निरासार्थं तत्सामानाधिकरण्येनैव प्रामाण्यसाधनेनापि अवच्छेदकावच्छेदेन प्रामाण्यानुमितिसंभवादुभयोरप्येकमेव धूमज्ञानं पक्षः । तत्र नैयायिकानां प्रमितिजनकतावच्छेदकरूपवत्त्वं हेतुः । तच्च व्याप्तिनिश्चयत्वमेव भवति । तत्रासिद्धिं बौद्धः शङ्कते—सर्वमिदमिति । गादाधर्याम् । अनुमानं धूमज्ञानं । युक्तिः

न्यायरत्नं ।

श्रीः ॥ न संभवति नोत्पत्तुमर्हतीति । अत्र संपूर्वकभूधातोरुत्पत्तियोग्यत्वरूपमर्थमभिप्रेत्योत्पत्तुमर्हत्वं नास्तीति । व्याप्तिनिश्चयश्च निषेद्धुमशक्यः सिद्ध्यसिद्धिभ्यां व्याघातात् । नचोत्पत्तियोग्यत्वाभावोऽपि वक्तुमशक्यश्चार्वाकमते धर्म्यप्रसिद्धेरिति वाच्यम् । व्याप्तिविषयकत्वसंशयान्यत्वज्ञानत्वानां प्रत्येकं प्रसिद्धानामेकजन्यतावच्छेदकत्वाभावस्यैव विवक्षितत्वात् । व्याप्तिविषयकत्वसंशयान्यत्वज्ञानत्वसमुदायत्वं जन्यतावच्छेदकतापर्याप्त्यनवच्छेदकमिति परमार्थः । नच सामान्यतो जन्यतावच्छेदके संशयान्यत्वस्य वक्तुमशक्यत्वाद्व्याप्त्यंशे संशयान्यत्वं वक्तव्यं । तच्च व्याप्त्यभावनिष्ठप्रकारतानिरूपित-

**समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रति-**

---

पेदानीमभिधातुमुचिततरात्, वक्ष्यत इत्यनेन तत्प्रतीक्षां विधाय व्या-
प्तिस्वरूपनिरूपणमयुक्तमित्याशङ्का परिजिहीर्षुस्तत्प्राथम्ये तस्य व्या-
प्तिग्रहोपायप्रतिपादनौपयिकत्व (रूप[1]) बीजं दर्शयन्नन्वित्यादिग्रन्थमव-
तारयति—**समारब्धेति** । व्याप्तिग्रहोपायाकथनेन प्रामाण्यव्यव-
स्थापनस्य अनिष्पन्नत्वात्समारब्धेति परीक्षाविशेषणम् । परीक्षा च

कृष्णभट्टीय ।

इत पदनुमानप्रामाण्यहेत्वसिद्धिनिरासद्वारा तत्साधकत्वरूपप्रकृतोपपाद
कत्वमपास्तमित्यर्थः । नचानुमानप्रामाण्यसिद्ध्युपयोगिपरामर्शस्वरूपनिर्वाह
करत्वेन तदुपोद्घातः कुतो न दर्शित इति वाच्यम् । उपायाभिधान
प्रतीक्षाया निर्बीजत्वापत्तेः । **इदानीं** व्याप्तिस्वरूपनिरूपणा प्राक् ।
**उचिततरत्वादिति** । उपोद्घातज्ञानादेव जिज्ञासासम्भवात् । तत्प्रतीक्षां व
पायनिरूपणस्य प्रारब्धप्रामाण्यनिरूपणाव्यवहितोत्तरत्वस्यागमात् । तत्प्राथम्ये
व्याप्तिस्वरूपनिरूपणस्य उपायनिरूपणाधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वे ।
अप्रमाणसाधर्म्येणेत्यादिग्रन्थेन अनुमानप्रामाण्यव्यवस्थापनेन प्राविनिरा
सात् व्याप्तिस्वरूपनिरूपणं व्यर्थमित्याशङ्कानिराकरणार्थं समारब्धेति वि
शेषणमित्याह—**व्याप्तीति** । **अनिष्पन्नत्वादिति** । निष्पन्नत्वमतीतकृतिवि

व्यायरत्न ।

**प्रतीक्षां विधायेति** । प्रतीक्षा भविष्यत्कालवर्तित्वप्रकारकज्ञानानुकू-
लव्यापारः । स च व्याप्तिग्रहोपायस्य वक्ष्यत इत्येवंरूपः । **तत्प्राथम्य इति** ।
तस्य व्याप्तिस्वरूपनिरूपणस्य । प्राथम्ये प्रथमतः कर्तव्यत्वे इत्यर्थः । तस्य
व्याप्तिस्वरूपनिरूपणस्य । **व्याप्तिग्रहोपायप्रतिपादनौपयिकत्वमिति** ।
औपयिकत्वं व्याप्तिग्रहोपायप्रतिपादकघटकोपायविषयकप्रतिपत्तिप्रयोजकत्वम् ।
प्रतिपत्तिश्च व्याप्तिग्रहजनकव्यभिचारज्ञानाभावसहचारज्ञानयोर्व्याप्तिग्रहजनकत्व
प्रकारिका । प्रयोजकत्वं च जनकज्ञाने जनकताघटकीभूतजन्यतावच्छेदक-
विशिष्टज्ञानस्य हेतुतया जन्यतावच्छेदकीभूताव्यभिचारनिश्चयसहचारज्ञानस्
योर्ज्ञाने घटकीभूताव्यभिचारसहचारज्ञानयोर्हेतुतया परंपरया जनकत्वरूपं बो
ध्यम् । ननु प्रामाण्यव्यवस्थापनस्याप्रमाणसाधर्म्येणेत्यादिग्रन्थेन समाप्ततया
समारब्धेति कथं युज्यते । आपाततस्तेन समारम्भत्वव्यवहारादत आह—**अ
निष्पन्नत्वादिति** । अपरिसमाप्तेरित्यर्थः । अप्रमाणसाधर्म्येणेत्यादेः परम-
तनिराकरणपरत्वात् "समारब्धेति युज्यत" इति शेषः । अनिष्पन्नत्वादित्यस्या-
नन्तरं "तन्निष्पत्तिरवश्यं संपादनीयेति सूचनाय" इति शेष इति केचित् ।

---

१ रूप क्रो. पाठ

कृष्णंभट्टीयं ।

सिद्धार्थाऽनुमानाप्रामाण्यं । तन्निराकरणं तद्विषयकज्ञाने मध्यस्थस्याप्रामाण्यज्ञानसंपादनं । तत्पूर्वकं स्वमतव्यवस्थापनं स्वसिद्धयुक्तिजन्यव्यवस्थितिजनकशब्दप्रयोगः । अनुमानप्रामाण्यस्यैतादृशपरीक्षापदार्थैकदेशव्यवस्थितावन्वयः । तथाचानुमानप्रामाण्यपरीक्षापदेन परसिद्धार्थानुमानाप्रामाण्यविषयकज्ञानधर्मिकाप्रामाण्यज्ञानसंपादनोत्तरकालीनस्वाभियुक्तिजन्यानुमानप्रामाण्यविषयकव्यवस्थितिजनकशब्दप्रयोगलाभः । परमतसिद्धो योऽर्थोऽनुमाने प्रामाण्याभाव॰, तन्निराकरणं तज्ज्ञानानुत्पत्तिप्रयोजको व्यापारः, तत्पूर्वक स्वाभिप्रेतार्थानुमानप्रामाण्यं तद्विषयकज्ञानानुकूलव्यापार इति केचित् । तस्य च न्यायरूपतया प्रयोजकत्वरूप जनकत्वं बोध्यम् । पराभिप्रेतार्थज्ञानप्रतिबन्धकज्ञानानुकूलव्यापारस्तु न परीक्षा । प्रतिज्ञादिनं प्रति स्वस्यापि परत्वात् तत्पूर्वकव्यापारस्यापि परीक्षात्वापत्तेः । तत्परीक्षादावप्यतदुद्देश्यादिनिरासपूर्वकस[म्य]क्सिद्धान्तकव्यापारस्यैव परीक्षापदार्थत्वाच्च । एवमप्रमाणसाधर्म्यमित्यादेः परमतनिराकरणस्वमतव्यवस्थापनपरतयैव स मारब्धेत्यादिपरीक्षात्वं बोध्यम् । कारणीभूतेति । अथ निरूप्यमानप्रतिपादनस्य निरुक्तसन्दर्भपरीक्षां प्रति कारणत्वं नैव संभवयुक्तिकमिति वाच्यम् । परीक्षापदार्थघटकीभूतस्वमतव्यवस्थितिरूपानुमितौ व्याप्तिग्रहोपायप्रतिपादनस्य हेतुत्वेन तद्विशिष्टे कारणत्वोक्तेः कथं [illegible] तस्य हेतुत्वमिति चेत् । इत्थम् । अप्रामाण्यरूपसाध्यानुमापकपार्श्वोक्तहेतुमत्ताज्ञानं मध्यस्थस्य जातं तादृशहेतुमत्ताज्ञाने [तस्याप्रामाण्यज्ञानसंपादनार्थं प्रथमतः प्रामाण्यसाधकहेतुमत्ताज्ञानं] तस्य संपादनीयम् । तच्च न संभवति । इन्द्रियसत्त्वादावेव प्रमितिजनकतावच्छेदकत्वाभावः प्रसिद्धतया तादृशेन्द्रियसत्ताभानज्ञानस्यैव स्वरूपासिद्धिज्ञानरूपस्य मध्यस्थे विद्यमानत्वात् । एवं च तादृशासिद्धिनिवारणपूर्वकहेतुमत्ताज्ञानसंपादनार्थं व्याप्तिग्रहोपायप्रतिपादनमिति रीत्या कारणत्वं बोध्यम् । प्रतिपादनं प्रतिपत्तिजनकशब्दप्रयोग. । तदेकदेशप्रतिपत्तौ व्याप्तिग्रहोपायविषयताकभेदान्वयः । कारणीभूतान्तर्वैय-

न्यायरत्नं ।

तम् । तत्र प्रामाण्यपरीक्षायाः प्रामाण्यसाधकयुक्तिप्रदर्शनेन सिद्धत्वाच्चतः प्रवृत्त्यनुदयेन तत्प्रतिबन्धकसिद्धत्वज्ञाननिवर्तनं । तन्निवृत्तिश्च सिद्धत्वघटकातीतत्वप्रवृत्तिनिवर्तनद्वारा । तन्निवर्तनं च परीक्षाविषयकृतिध्वंसासमानकालीनपरीक्षाविषयककृतिविषयत्वरूपसमानाधिकरणघटकपरीक्षाविषयककृतिध्वंससमानकालीनत्वज्ञानस्योक्तसम्बन्धद्वयेन वर्तमानध्वंसवत्त्वरूपातीतत्वज्ञाने प्रतिबन्धस्तथा । तथोक्तसम्बन्धेनोक्तध्वंसवत्त्वज्ञाने आद्यत्वनिश्चयस्य कथं प्रतिबन्धकत्वमिति शङ्काम् । आद्यत्वस्योक्तसम्बन्धेनोक्तध्वंसवत्त्वाभावव्याप्यतया तदभावव्याप्यवत्ताज्ञानविधयैव प्रतिबन्धकत्वात् । नचैकमात्रकृतिजन्यफलानुकूलकृतानुको-

१ स्थितिविषयक इति पाठः. २ तथात्वापत्तेः. ३ मै. पु. अ.

शेषणम् । यद्यपि व्याप्तिग्रहोपायप्रतिपादनस्य अनुमानप्रामाण्यव्यवस्थापकत्वकथनं न तस्यावश्यकत्वप्रदर्शनाय । व्याप्तिग्रहोपायश्च वक्ष्यत इत्येतद्ग्रन्थावतरणाद्व्याप्तिग्रहोपायस्य अनुमानप्रामाण्योपपादकतालाभेनैव तल्लाभात् । तथापि प्रामाण्यव्यवस्थापननिर्वाहकतया भवतु व्याप्तिग्रहोपायस्य इदानीमाकाङ्क्षितत्वम् । एवमपि तत्र व्या-

कृष्णम्भट्टीय ।

धर्ममाशङ्कते—**यद्यपीति** । तस्य व्याप्तिग्रहोपायप्रतिपादनस्य । अवतारणं सर्वमित्यादिग्रन्थ । एवञ्च तद्ग्रन्थेनोपायप्रतिपादने समारब्धानुमानप्रामाण्यपरीक्षाकारणत्वसूचनसम्भवे, पुन कारणीभूतान्ताभिधान पुनरुक्तिग्रस्तमिति भाव । **तल्लाभात्** व्याप्तिग्रहोपायप्रतिपादनस्यावश्यकतालाभात् । कारणीभूतान्तोपादान एव उपायप्रतिपादने उक्तरीत्या स्वस्यापि प्रामाण्यव्यवस्थापनजनकस्य धर्मिपारतन्त्र्येण तज्जनकव्याप्तिस्वरूपनिरूपणे लाभो भवति नान्यथेति । सामग्र्यन्तरेण कथमपि तदुपसम्भवाभाव पुन कारणीभूतान्तकीर्तनमित्याशयेन समाधत्ते—**तथापीति** । नच तत्र तल्लाभ किमर्थमिति वाच्यम् । उपायप्रतिपादनस्य जनके व्याप्तिस्वरूपनिरूपणे परीक्षाजनकत्वस्यापि लाभेनात्यन्तावश्यकत्वलाभात् । **एवमपीति** ।

न्यायरत्न ।

भयसम्बन्धेन तादात्म्यसम्बन्धावच्छिन्नयो समावेशेन सामान्यव्याप्तिग्रह इति वाच्यम् । तथापि प्रामाण्यपरीक्षाघटकतिरस्य तादृशकृतावभावेन विशेषव्याप्तेरव्याहतत्वात् । इत्थञ्च समारब्धत्वविशेषणाधीनकृतिविशेषकार्यत्वज्ञाने ज्ञात एव निरुक्तसम्बन्धेन तादृशफलज्ञानानुत्पादनेन तद्घटितसिद्धज्ञानानुत्पाद समपि नान्यथेति । व्याप्तिग्रहोपायप्रतिपादनस्यानुमानप्रामाण्यव्यवस्थाप्रयोजकत्वज्ञानार्थं कारणीभूतेति विशेषणं वक्तव्य, तथाच्चासिद्धमिति शङ्कते—**यद्यपीति** । **प्रामाण्यव्यवस्थापकत्वकथनमिति** । व्यवस्था निश्चय स चानुमानधर्मिक । तथाच व्यवस्थापकत्व प्रामाण्यानुमितिप्रतिबन्धकसत्प्रतिपक्षादिज्ञानविघटकत्वम् । **आवश्यकत्वं** सफलत्वम् । प्रामाण्यव्यवस्थापकत्वविशिष्टव्याप्तिग्रहोपायप्रतिपादननिदानत्वलाभाय तद्विशेषणम् । नच तल्लाभ किमर्थमिति वाच्यम् । तद्ग्रन्थस्य व्याप्तिनिरूपणस्यास्य तावश्यकत्वलाभार्थत्वादित्याशयेन समाधानमाह—**तथापीति** केचित् ॥

कारणीभूतान्तोपादान एवोक्तरीत्या स्वस्यापि प्रामाण्यव्यवस्थापनजनकस्य धर्मिपारतन्त्र्येण व्याप्तिग्रहोपायप्रतिपादनजनके व्याप्तिनिरूपणे लाभो भवति नान्यथेति पुन कारणीभूतान्तविशेषणमित्याशयेनाह **तथापीत्यपरे** ॥

परे तु स्यादेव यदि भूतान्तेन ग्रन्थेन व्याप्तिग्रहोपायप्रतिपादनस्यावश्यकत्वसूचनं ग्रन्थकर्तुरभिप्रेतं, तदेव न । किंतु तस्येदानीं वक्तुमर्हत्वे विवादाभाव-

पादननिदानं व्याप्तिस्वरूपनिरूपणमारभते—

---

प्तिस्वरूपनिरूपणं विना सम्भवतीति प्रथमतस्तदेवोचितमित्येतत्सूच-
नाय तदभिहितम्। निदानमिति। व्याप्तिघटकीभूताव्यभिचाराग्र-
भावे बाधाभावमुद्रया व्यभिचारज्ञानाभावो हेतुः। साध्यसमानाधि-
करणवृत्तिहेतुतावच्छेदकाग्रहे च विशेषणज्ञानमुद्रया सहचारग्रहो
हेतुरिति क्रमेण व्याप्तिग्रहोपायप्रतिपादनस्य व्याप्तिस्वरूपप्रति-

कृष्णभट्टीय।

तत् प्रामाण्यव्यवस्थापनम्। नच स्वरूपनिरूपणं विना प्रामाण्यव्यवस्थापनं न सम्भवतीति स्वरूपनिरूपणं एव प्रामाण्यव्यवस्थापकं वक्तुमुचितमिति वाच्यम्। व्याप्तिस्वरूपनिरूपणे प्रामाण्यव्यवस्थापनसाक्षात्कारणताया धाविति सम्प्रदाय। वस्तुतो नैयायिकदेशी स्वरूपासिद्धिवारणायोपा धिनिरूपणं साधनाप्रसिद्धिवारणाय व्याप्तिस्वरूपनिरूपणमिति साक्षात्का रणता बोध्या।

यद्वा सर्वमिदं सतीत्याद्यवतारणग्रन्थेन व्याप्तिग्रहोपायप्रतिपादने प्रामा ण्यव्यवस्थापनकारणत्वलाभसम्भवेऽपि व्याप्तिस्वरूपनिरूपणस्य केवलव्याप्ति ग्रहोपायप्रतिपादननिदानत्वलाभेऽपि, न कथमपि व्याप्तिस्वरूपनिरूपणे प्रामाण्यव्यवस्थापकत्वविशिष्टव्याप्तिग्रहोपायप्रतिपादननिदानत्वस्य लाभ सम्भवति। एवञ्च प्रामाण्यव्यवस्थापकत्वविशिष्टोपायप्रतिपादननिदानीभूत व्याप्तिस्वरूपादन्यस्यैव निरूपणमकृत्वा केवलव्याप्तिग्रहोपायप्रतिपादननिदा नीभूतव्याप्तिस्वरूप[निरूपणारम्भोऽर्थान्तरमस्त इत्याशङ्कायां तादृशनिदान त्वपि व्याप्तिस्वरूपनिरूपण] एवेति मन्तव्यम्। तत्र कारणीभूतान्तविशेषणा लभ्यत इति कारणीभूतान्तविशेषणसार्थक्यमित्याशयेनाह—तथापीति। तद्विति। प्रामाण्यव्यवस्थापकत्वविशिष्टव्याप्तिग्रहोपायप्रतिपादनमित्यर्थः। व्याप्नोति। धूमव्यापकवह्निसमानाधिकरणधूमत्वादिकं व्याप्तिः। व्यापकस्य

न्यायरत्न।

सूचनाय स्वानुमतिसूचनमेवाभिप्रेत। तत्र न पूर्वग्रन्थतात्पर्यविषय इत्याह— तथापीति। भवतित्यादिनाऽऽकाङ्क्षितत्वमित्यन्तेन मूलान्तोऽत्कीर्तनफलं स्वानु मतिसूचनं स्पष्टीकृतमित्याह॥

**प्रथमतस्तदेवोचितमिति**। विशेषणविशिष्टविशेष्यज्ञानकत्वग्रहे धर्मपार तन्त्र्येण विशेषणज्ञानकत्वस्यापि ग्रहादुपजीव्यजनने निरूपणीये विशेष्यमात्रज्ञानक व्याप्तिस्वरूपनिरूपणस्य प्राथम्यमनुचितमित्याशङ्काविरहाद्व्याप्तिस्वरूपनिरूपणस्यैव

---

१ नै. पु. अ.।

पायाशक्यत्वादिति भावः । प्रथमतः पूर्वपक्षस्यैव अभिधानेन नि-रूपयतीत्यसंगतम् । अत आरभत इत्युक्तम् । निरूपणस्य परमतनि-

कृष्णंभट्टीयं ।

ग्रहं प्रति व्यभिचारग्रहो हेतुः सहचारविशिष्टधूमत्वादिग्रहो हेतुरित्याकार-कोपायनिरूपणे सिद्धान्तसिद्धव्याप्तिस्वरूपनिरूपणस्य स्वतन्त्रान्वयव्यतिरेक-साध्यादज्ञातव्याप्तिस्वरूपकत्वेन्यं प्रत्युपायनिरूपणस्य दुष्करत्वादिति भाव. । तल्लाभार्थमेव व्याप्तिघटकीभूतेत्युक्तं । ननु निरूपणस्यापि घटकतावि-षयकत्वलाभार्थं, प्रयोजनाभावात् । नन्वत्र व्याप्तिस्वरूपनिरूपणमारभत इति कथनमयुक्तम् । तादृशव्याप्तिग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपं निरूपयतीत्यस्यैव सम्भवात् । निदानमिति चाभेदसंबन्धेन निरूपण-क्रियाविशेषणमित्यत आह—प्रथमत इति । धात्वर्थो निरूपणं, केवल-ज्ञानानुकूलव्यापारः शब्दप्रयोगलक्षणः । द्वितीयार्थो विषयित्वं तदेकदेशज्ञा-नेऽन्वेति । आख्यातार्थः कृतिः, तस्यां धात्वर्थान्वयः । आख्यातार्थपर्यवसान-त्वस्य कृतावन्वयः । नन्वित्यादिनोक्त तृतीयार्थो भेदः, धात्वर्थेन भनक्तीति-वत् । तथाच निरुक्तपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादननिदानाभिन्नं मन्यनुमितिहेतुव्याप्तिज्ञानेत्यादिग्रन्थाभिन्नं यथाव्याप्तिस्वरूपनिरूपणं तदनुकूले-ष्वर्मीणकृतिमान्मणिकार इति बोधः । तथाचेदानीं नन्वित्यादिना पूर्वपक्ष-स्यैवाभिधानादिदानीं तत्कृतेर्नन्वित्यादिग्रन्थाभिन्ननिरूपणानुकूलतया [प्रति-योग्यसमानाधिकरणेत्यादिव्याप्तिस्वरूपविषयकनिरूपणानुकूलतया व्याप्ति-स्वरूपनिरूपणानुकूलवर्तमानकृतिमत्त्वस्य मणिकारे बोधादसंगतिरित्यर्थः] आरभत इत्युक्तमिति । द्वितीयार्थो विषयित्वम् । आङ्पूर्वकरभधातोरा-द्यकृतिरर्थः । प्रारम्भविषयकधातुयोगादाश्रयत्वमाख्यातार्थः । शेषं मानवत् । एवंच तादृशनिदानाभिन्नं यत्तादृशग्रन्थाभिन्न व्याप्तिस्वरूपनिरूपणं तद्विषय-काद्यकृत्याश्रयो मणिकार इति बोधः ।

नन्वेवमपीदानीं तत्राद्यकृतौ सिद्धान्तसिद्धव्याप्तिस्वरूपनिरूपणानुकूलत्व-स्याऽसंगतिर्दुर्वारैवेत्यत आह—निरूपणस्येति ।

व्यायरत्न ।

माधम्यमुचितमिति भावः । ननु व्याप्तिस्वरूपं निरूपयतीत्येव वक्तव्ये व्याप्तिस्वरूपनिरूपणमारभत इति किमर्थमुक्तं अर्थाबाधेऽप्यधिकलेखनस्यायुक्त-त्वादित्यत आह—प्रथम इति । निरूपयतीत्यसंगतमिति । निरूपयती-त्यनाख्यातार्थकृतौ निरूपणस्य साध्यतारूपविषयतासंबन्धेनान्वयस्य शाब्दबोधे सिद्धत्वेनस्थापितत्वात्पूर्वपक्षाभिधानजनककृतेः सिद्धान्तकथनपर्यवसितनिरूप-णसाध्यत्वाभावादिति भाव इति केचित् ।

अपरेतु व्याप्तिस्वरूपं निरूपयतीत्यत्र व्याप्तिस्वरूपविषयकज्ञानानुकूलव्या-पारानुकूलवर्तमानकृतेरेव वाक्यार्थतया अन्नोच्यत इत्यादिना प्रतिपादित-

१ [] एतदन्तर्गत क्वचिन्नदृश्यते.

राकरणपूर्वकसिद्धान्तकथनरूपतया पूर्वपक्षाभिधानतत्खण्डनयोरपि तदा[2]रम्भणरूपतेति ध्येयम् ॥

कृष्णंभट्टीयं ।

**तदारम्भणरूपतेति ।** तद्विषयकाद्यकृतिविषयतेत्यर्थः । तथा च निरूपणस्य परमतेत्यादिरूपत्वोपगमे नन्वित्यादिग्रन्थस्यापि निरूपणपदार्थतया तद्विषयकाद्यकृतेर्निरूपणविषयकत्वमक्षतमेवेति आरभत इत्युक्तिसंगतिः । नचैवं निरूपयतीत्याद्युक्तिपक्षेऽपि धात्वर्थनिरूपणस्य परमतनिराकरणपूर्वकस्वमतव्यवस्थितिरूपत्वस्वीकारे बाधकाभावादुक्तरीत्या नन्वित्यादिग्रन्थानुकूलेदानींतनकृतेर्निरूपणविषयकत्वमनपवादमिति वाच्यम् । आरभत इत्युक्तावाख्याते सर्वविषयकत्वस्वीकारेण निरूपणपदस्य यथाश्रुतार्थपरत्वेऽप्यनुपपत्त्यभावात् । नच निरूपयतीत्युक्तिपक्षेऽपि आख्यातेन कृतित्वेनाद्यकृतेरेव बोधनस्वीकारादारभत इति व्यर्थमेवेति वाच्यम् । निरूपयतीत्यनेन नियमत आद्यकृतिबोधने मानाभावात् । आरभत इत्युच्यमाने आङ्पूर्वकरभधातुना आद्यकृतेरेव बोधनादनुपपत्त्यभावात् । नचैवमाद्यकृतेः सविषयकत्वस्वीकारस्यावश्यकतया निरूपणपदस्य परमतेत्याद्यर्थकत्वकथनं व्यर्थमिति वाच्यम् । निरूपणपदस्य प्रतियोग्यसमानाधिकरणेत्यादिनिरूपणपरत्वे तस्य नन्वित्यादिनेति तृतीयार्थाभेदस्य वक्तव्यतया तदसंगतिः स्यादतस्तत्प-

व्याघरणं ।

सैव स्वमते व्याप्तिस्वरूपतद्विषयकनिरूपणानुकूलकृतेर्वर्तमानकालीनत्वाभावेन निरूपयतीति वाक्यार्थबाधादिति भाव **इत्याहुः** ॥

**आरभत इत्युक्तमिति** व्याप्तिस्वरूपनिरूपणमित्यादि । परमतनिराकरणपूर्वेन व्याप्तिस्वरूपविषयकज्ञानानुकूलव्यापारो व्याप्तिस्वरूपनिरूपणपदार्थः द्वितीयार्थो विषयत्वं आङ्पूर्वकरभधातोराद्यकृतिरर्थः आख्यातार्थश्चाश्रयत्वं वर्तमानकालश्च, कालस्य धात्वर्थेऽन्वयः । तथा च परमतनिराकरणपूर्वकस्वमतसिद्धव्याप्तिस्वरूपविषयकज्ञानानुकूलव्यापारानुकूलवर्तमानाद्यकृतिमान्मणिकार इति वाक्यार्थः । आद्यकृतेश्च स्वरूपनिरूपणविषयकत्वनियमात्सिद्धान्तसिद्धव्याप्तिनिरूपणस्याद्यकृतिविषयत्वं, तथा चोक्तं "पूर्वपक्षाभिधानतत्खण्डनयोस्तदारम्भकत्वमि"ति । आरम्भकत्वमाद्यकृतिविषयत्वमिति भावः ॥

केचित्तु व्याप्तिस्वरूपनिरूपणमारभत इत्यत्र निरूपणपदार्थः पूर्ववदेव । द्वितीयार्थ उद्देश्यत्वं सामग्रीमेलनसाध्यकृतिदशायामपि घटमारभत इति व्यवहारात् । तच्च सिद्धान्तकथनसाध्यत्वाभाववत्यामपि पूर्वपक्षाभिधानकृतौ सिद्धान्तसाध्यत्वस्वजनककृतौ चाव्याहतं । परमतनिराकरणपूर्वकस्वसिद्धसिद्धान्तकथनमुद्दिश्यैव पूर्वपक्षाभिधानतत्खण्डनयोरारब्धत्वात् । तदारम्भणरूपतेति । व्याप्तिनिरूपणोद्देश्यककृतिविषयतेत्यर्थ इत्याहुः ॥

१ स्व सिद्ध का. पाठः. २ रम्भेति का. पाठः.

नुपपद्यते । तथाचाव्यभिचारपदार्थो नानुमितिजनकज्ञानविषय इ-

कृष्णभट्टीयं ।

साध्य इत्याह—तथाचेति । उक्तभेदकूटसाधने न तावदिति नञुत्कीर्तन-मप्यधिकमित्यपि दूषणं द्रष्टव्यम् । ननु अव्यभिचारितस्यैव पक्षत्वे पक्षानुगत पक्षतावच्छेदकं विवेकुमशक्यमित्यत सामान्यत अव्यभिचारपदार्थत्वेन अव्यभिचारपदजन्यप्रतीतिविषयत्वात्मकेन पक्षत्वं दर्शयति—तथाचेति।

न्यायरत्न ।

कव्यभिचरितत्वपदार्थस्य पक्षत्वमाह—तथाचेति। अव्यभिचरितत्वपदार्थ इति । अनाव्यभिचरितत्वत्वस्याननुगतत्वेन पक्षतावच्छेदकत्वासम्भवादव्यभिचरितत्वपदस्य तत्प्रतिपाद्यत्वरूपानुगतधर्मावच्छिन्नपरत्वमङ्गीकृत्याव्यभिचरितत्वपदार्थस्य पक्षत्वानुसरणम् । नचाननुगतमेव पक्षतावच्छेदकमस्त्विति वाच्यम् । एतद्धर्मावच्छिन्नस्य व्याप्तित्वनिराकरणेऽप्यन्यधर्मावच्छिन्नस्य व्याप्तित्वशङ्काऽनिराकरणात्तत्तद्धर्मावच्छिन्नरूपार्थपञ्चकपरतायास्तत्पदस्य वक्तव्यतया "सद्धनुचरित" इति न्यायातिक्रमापत्तेर्वाक्यभेदापत्तेश्च । "नन्वत्रोच्यत" इत्यादिना वक्ष्यमाणव्याप्तिभेदसाधने सिद्धसाधन । साध्याभाववद्वृत्तित्वादिभेदसाधने बाध इत्यत आह—नानुमितिजनकज्ञानविषय इति । तथाचानुमितिजनकज्ञानविषयत्वस्याव्यभिचरितत्वपदार्थे परैः स्वीकारान्न सिद्धसाधनबाधाविति भाव । अथैवमपि पक्षधर्मावद्वृत्तित्वकालीनपर्वतो वह्निमानित्याद्यनुमितिजनकज्ञानविषयत्वस्यानुमितिजनकतावच्छेदकविषयत्वस्य चाव्यभिचरितत्वपदार्थे सत्त्वाद्बाधो दुर्वार । नच धर्मितावच्छेदकतानात्मकत्वस्य विषयताविशेषणत्वान्न बाध इति वाच्यम् । तथापि साध्याभाववद्वृत्तिहेतुकेऽनुमितिजनकज्ञानीयधर्मितावच्छेदकतानात्मकविषयताया अपि तत्र सत्त्वेन बाधस्य दुर्वारत्वात् । नच तत्रापि व्याप्तिपदार्थधर्मितावच्छेदकतयैव साध्याभाववद्वृत्तित्वस्य भानान्न बाध इति वाच्यम् । एवमपि सामानाधिकरण्यत्वेन तादृशवृत्तित्वाभावावगाहिज्ञानमादाय बाधस्य दुर्वारत्वात् ।

अथ प्रमान्यवृत्तित्वस्य तादृशविषयताया निवेशान्न दोष इति चेत्सत्यम् । तथापि साध्याभाववद्वृत्तित्वकालीनपक्षकस्थले धर्मितावच्छेदकप्रकारकज्ञानविषयानुमितिजनकज्ञानीयतादृशविषयत्वस्य तत्र सत्त्वाद्बाधस्यानिराकरणात् । नन्वनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतापर्यन्तनिवेशान्न दोष इति चेत्तथापि सिद्धसाधनापत्ते । तथाहि अनुमितिं प्रति परामर्शानामनेकव्यक्तिकाना हेतुत्वे परस्परजन्यानुमितौ व्यभिचारापत्त्या तत्तल्लिङ्गकपरामर्शविशिष्टानुमितिं प्रति तस्य तस्य हेतुताया वक्तव्यतया तत्र चानुमितित्वस्य जन्यतावच्छेदके निवेशस्य निष्प्रयोजनकतयाऽनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयत्वस्य मतद्वयेऽप्यव्यभिचरितत्वपदार्थेऽसत्त्वात् । नचैवमनुमितित्वावच्छिन्नजन्यताया अप्रसिद्धत्वादेव न सिद्धसाधनावकाश इति वाच्यम् । तथा सत्यनुमितित्वाव-

---

१ बोध्यम्. २ दर्शितम्.

त्यर्थः ॥ अनुमितिजनकत्व नाव्यभिचारपदार्थावच्छिन्नहेतुविषयता-

कृष्णभट्टीयं ।

विशेषणवत्त्वव्याप्तौ विशेषभेदकूट इति त्वनावेव गौरवात् । अभिमतीत्या सिद्धिभेदसाधने बाधाच्च । नन्वत्रानुमितिजनकज्ञानविषयस्य सिद्धान्तसिद्ध व्याप्तेर्भेदसाधने सिद्धसाधनम् । तादृशस्य साध्याभाववदवृत्तित्वादिरूप व्याप्तेर्भेदसाधने बाध । पक्ष· स्वव्यापकसाध्यव्यापकसाध्यसमानाधिकरण-हेतुमान् हेतुश्च साध्याव्यभिचारीति समूहालम्बनस्यानुमितिजनकत्वात् । एवं साध्याभाववदवृत्तित्वादिरूपतदव्यभिचारपदार्थाभावो हेतु स्यात्तत्र प्रत्येक हेतुत्वे भागासिद्धि । कूटस्य हेतुत्वे स्वरूपासिद्धि । अनुमिति-जनकतायामव्यभिचारविषयकज्ञानावृत्तित्वसाधने अनुमितिजनकज्ञानता-[वच्छेदका]वच्छेदेनाव्यभिचारविषयकत्वसाधने बाध । सामानाधिकर ण्येन तत्साधने सिद्धसाधनमित्यत आह—अनुमितिजनकत्वमिति । लक्षणया[चैव] फलाभावो बोध्य ।

अत्र साध्ये हेतौ वा हेतावनिवेशो अव्यभिचारपदार्थनिरूपितावच्छिन्नधर्माव च्छिन्नत्वाभावसाधने वह्न्यभाववदवृत्ति पर्वतो वह्निमान्धूमादित्यादौ वह्नि

न्यायरत्न ।

स्वरूपसम्बन्धेनाभावांशे मानावृत्तित्वविषयताहेतुतावच्छेदकस्वरूपसम्बन्धावच्छिन्नेति साम्प्रत । पक्षविषयतानिरूपितत्वावच्छेदकहेतुतावच्छेदकसम्-बन्धावच्छिन्न-विषयतात्वावच्छिन्नविषयतानिरूपितत्वपर्यन्तस्य विवक्षणीयतया पक्षस्यान प्रकारत्वेन हेतोश्च तदंशे विशेष्यत्वेन हेतुविषयताया तादृशसम्बन्धावच्छिन्नविषयतात्वेन पक्षविषयतानिरूपितत्वविरहात् । अथवा चरमविषयताया स्वरूपसम्बन्धाव च्छिन्नत्वनिवेशेन सर्वोऽप्ययं दोषो वारणीय ॥

अथैवमपि वह्न्यभाववदवृत्तिहेतुकेऽनुमितिजनकज्ञानीयतादृशविषयताया अपि तत्र सत्त्वाद्बाध इति चेन्न । हेतुतावच्छेदकावच्छिन्नविषयतानिरूपितत्वस्यापि विषयताया विशेषणदानात् ।

अथैवमपि साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकस्य व्याप्तित्वमते हेतुता-वच्छेदकावच्छिन्नविषयतानिरूपितविषयताया अपि तत्र सत्त्वाद्बाध इति चेन्न । तादृशविषयतापर्याप्यमानस्य विवक्षितत्वात् ।

इत्थञ्च अनुमितिनिष्ठज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूत-धर्मितावच्छेदकतानामकपक्षविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नहेतुताव-च्छेदकसम्बन्धावच्छिन्नविषयतानिरूपितस्वरूपसम्बन्धावच्छिन्नविषयताभेद· साध्य इति न कश्चिद्दोष इति संक्षेप· ॥ निरुक्तपक्षे निरुक्तसाध्यस्य साधनतया तद्धि नेत्यादिना प्रतिपादितसाध्याभाववदवृत्तित्वाविभेदपक्षकस्य हेतोरभिधित्त पर्यवसितमाह—अनुमितिजनकत्वमिति । अव्यभिचारपदार्थाव-च्छिन्नहेतुविषयता अव्यभिचारपदजन्यप्रतीतिविषयत्वेन सङ्केतविषयध-र्मावच्छिन्नहेतुविषयतेत्यर्थः ।

कृष्णंभट्टीयं ।

व्याप्यधूमवान्वह्न्यभाववद्वृत्तिपर्वत इत्याकारकपरामर्शनिष्ठानुमितिजनकतायां धर्मितावच्छेदकावच्छिन्नविषयताविधया अव्यभिचारपदार्थावच्छिन्नविषयत्वावच्छिन्नत्वसत्त्वेन बाधः कूटरूपहेतौ स्वरूपासिद्धिश्चेति हेतुनिवेशः। एवंच तादृशजनकतायामव्यभिचारपदार्थावच्छिन्नविषयता[त्वा]वच्छिन्नत्वसत्वेपि तादृशपदार्थावच्छिन्नहेतुविषयता[त्वा]वच्छिन्नत्वाभावसत्वान्न बाधादिः। न च तथापि वह्न्यभाववद्वृत्तिधूमवन्महानससदस्यः पर्वतो वह्निमान्धूमादित्यादिस्थलीयपरामर्शजनकतायां बाधादिर्दुर्वार एवेति वाच्यम्। अव्यभिचारपदार्थावच्छिन्नहेतुविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नत्वाभावस्यैव साध्यत्वादिविवक्षणेनादोषात्। न च तथापि पर्वतो वह्निमान्वह्न्यभाववद्वृत्तेरित्यादौ हेतुतावच्छेदकपर्यन्तस्य व्याप्तित्वमते हेतुव्यापकवह्निसमानाधिकरणवृत्तिवह्न्यभाववदवृत्तित्वरूपहेतुतावच्छेदकपरामर्शात् 'पर्वत' इत्याकारकनिष्ठधर्मितावच्छेदकपरामर्शजनकतायां बाधादिर्दुर्वार। तस्यां तादृशहेतुतावच्छेदकरूपाव्यभिचारपदार्थावच्छिन्नहेतुविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताघटितत्वसत्वादिति वाच्यम्। पर्याप्तिनिवेशेनाव्यभिचारपदार्थपर्याप्तविषयतानिरूपितहेतुविषयतानिरूपितप्रकृतपक्षविषयताघटितधर्मानवच्छिन्नत्वविवक्षणात्। यथोक्तस्थल एव हेतुव्यापकवह्निसमानाधिकरणवृत्तिवह्न्यभाववदवृत्तित्ववह्न्यभाववदवृत्तिमान्पर्वत इत्यन्तरा तद्धर्मितावच्छेदकपरामर्शजनकतायां व्याप्तिधर्मितावच्छेदकीभूताव्यभिचारपदार्थमात्रपर्याप्तधर्मितावच्छेदकतात्मकविषयतानिरूपितहेतुविषयतानिरूपितप्रकृतपक्षविषयताघटितधर्मावच्छिन्नत्वसत्त्वाद्बाधादिर्दुर्वार एवेति वाच्यम्। अव्यभिचारपदार्थनिष्ठविषयतायां धर्मितावच्छेदकताभिन्नत्वरूपविशेषणदानात्। नचैव हेतुपदमनर्थकं वह्न्यभाववदवृत्तिपर्वतपक्षकपरामर्शे वह्न्यभाववदवृत्तित्वविषयताया धर्मितावच्छेदकत्वरूपत्वेनादोषादिति वाच्यम्। पर्वतो वह्निमान्वह्न्यभाववदवृत्तेरित्यादौ वह्न्यभाववदवृत्तित्वव्यापकसाध्यसमानाधिकरणहेतुमान्पर्वत इति परामर्शजनकतायां वह्न्यभाववदवृत्तित्वव्यापकत्वमादाय बाधादिवारणाय हेतुतावच्छेदकावच्छिन्नविषयतालाभार्थं हेतुपदम्। वह्न्यभाववदवृत्तिमत्त्वादान्येन हेतुतास्थलेऽपि हेतुपदप्रयोजनं बोध्यम्।

यत्रानुमितिजनकज्ञान इत्यनुक्तम्। तत्र सप्तम्यर्थो निष्ठत्वम्। तथाच तादृशज्ञाननिष्ठजनकतालाभ इति केचित्। एवमपि निष्ठालाभात् अव्यभिचारविशिष्टविषयत्वं तु न निवेशितम्। अव्यभिचरितत्वेन धूलीपटलादिभ्रमव्यावृत्त्यर्थादिति। अव्यभिचारपदार्थो हेतुविषयतावच्छेदकत्वेन विशेषितः। व्यापकसामानाधिकरण्यत्वेनाव्यभिचारपदार्थावच्छिन्नहेतुविषयता-

न्यायत्वं।

अत्र केचिज्ज्ञेयत्वं वाच्यत्वाव्यभिचारीति व्यवहारानुरोधेन साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसाध्यव्यभिचारपदार्थ-

घटितधर्मावच्छिन्नमिति पर्यवसितम् । अत्र हेतुमाह—तद्धि न साध्याभाववदवृत्तित्वमित्यादि(ना) । हि=यतः । साध्याभावव-

कृष्णभट्टीय ।

गादाय बाधवारणाय निरूप्यनिरूपकभावापन्नविलक्षणावच्छेदकताया प्रमीयावच्छेदकताया वा निवेशः । नचैवंसाधनमधिक तत्तदव्यभिचारपदार्थावच्छिन्नत्वेत्यादिक्रमेण च साधनादेवेष्टसिद्धिरिति वाच्यम् । अव्यभिचारपदार्थावच्छिन्नत्वेत्यादिक्रमेण सोपाधिक पदार्थावच्छिन्नत्वेत्यादिक्रमेण च साधनादिक्रमेण पूर्वपक्षशरीरमित्याशयेन तथोक्तिरिति । नन्वत्राव्यभिचारपदार्थोऽनुमितिजनकतावच्छेदकहेतुविषयतावच्छेदक इत्येवास्तु । नच वह्न्यभाववदवृत्तिः पर्वतो वह्निमान्धूमादित्यादौ अव्यभिचारे परामर्शनिष्ठजनकतावच्छेदकीभूतपक्षविषयतामादाय बाधस्य हेतुपदनिवेशेनवारणेऽपि वह्न्यभाववदवृत्ति[धूमवान्]महानसधर्मपर्वतपक्षकोक्तस्थले परामर्शनिष्ठजनकतावच्छेदकहेतुविषयतावच्छेदकत्वसत्त्वेन बाध इति वाच्यम् । पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितत्वेन हेतुविषयताया विशेषणीयत्वात् । यद्येवमपि वह्निमान्वह्न्यभाववदवृत्तेरित्यादौ हेतुतावच्छेदकपर्याप्त्यव्याप्तिघटकत्वे हेतुव्यापकसाध्यसमानाधिकरणवृत्तिवह्न्यभाववदवृत्तित्ववद्वानिति निर्धर्मितावच्छेदकपरामर्शमादाय बाध एवेति वाच्यम् । तादृशहेतुविषयतावच्छेदकतापर्याप्त्यभावस्य वाच्यत्वात् । नच तत्रैव हेतुव्यापकवह्निसमानाधिकरणवह्न्यभाववदवृत्तिधान्वह्न्यभाववदवृत्तिमानिति अन्तराधर्मितावच्छेदकपरामर्शीयहेतुविषयतावच्छेदकतापर्याप्तिसत्त्वेन बाधो दुर्वार । एवं हेतुपदानुपादाने पर्वतो वह्निमान्वह्न्यभाववदवृत्तिमत इत्यादौ तादात्म्येन हेतुत्वस्थले हेतुव्यापकसाध्यसमानाधिकरणवृत्तिवह्न्यभाववदवृत्तिमद्वान्पर्वत इत्यादिरूपानीयमनकताया हेतुसमानाधिकरणेत्यशमादाय बाध । तादृशहेतुतावच्छेदकविषयताया परम्परया प्रकृतपक्षविषयतानिरूपितत्वादिति वाच्यम् । तादृशहेतुतावच्छेदकावच्छिन्नहेतुविषयतानिरूपितधर्मितावच्छेदकतापरत्वावच्छेदकतापर्याप्त्यभावस्य विवक्षणीयत्वादिति चेन्नैवम् । तथासति साध्यहेत्वोरभेदप्रसङ्गात् । तद्धि नेति । तदव्यभिचरितत्वं साध्याभाववदवृत्तित्वादि-

न्यायरत्न ।

ज्ञानद्वयजनकत्वाद्धेतुपदानुपादानेऽव्यभिचारपदार्थावच्छिन्नसाध्यतावच्छेदकनिष्ठविषयताघटितधर्मावच्छिन्नत्वाभावस्य सिद्धान्तिमतेऽनुमितिजनकतायामभावाद्बाध इति तदुपात्तमित्याहु ॥

अथैवमपि हेतुत्वस्य सामान्यत केवलान्वयित्वेन साध्यतावच्छेदकविषयताव्याप्तिर्दुर्घटा । विशिष्य धूमत्वादिना हेतुनिवेशेऽपि धूमसाध्यतावच्छेदकानुमितिजनकताया बोधो दुर्वार एव । अनुमितिजनकतात्वसामानाधिकरण्येन

१ इति त्वनुपादेयम् । पक्षाक्षिप्तत्वादवादोषात् इति मे पा० अधिकम्

पान्वयः। तथाच साध्याभाववदवृत्तित्वादिरूपा [1]येऽव्यभिचारपदार्थास्तदवच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नत्वाभावकूटवत्त्वादिति निरुक्तपर्यवसितसामान्याभावसाधकः फलितो हेतुः। नचाप्रयोजकत्वम्। विशेषाभावकूटस्य सामान्याभावव्याप्यतायामविवादात्। [3]तत्र साध्याभाववदवृत्तित्वादिरूपाः ये, पञ्चाव्यभिचारपदार्थाः, तदवच्छिन्नविषयताघटितधर्मावच्छिन्नत्वाभावस्य प्रत्येकसाधकं हेतुं वक्ष्यति—केवलान्वयिन्यभावादिति। साध्येऽत्यन्ताभावाप्रतियोगित्वान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपकेवलान्वयित्वग्रह-

## कृष्णंभट्टीयं।

विषयकत्वानवच्छिन्नत्वोक्तौ वह्न्यभाववदवृत्तिपर्वतादिपक्षकपरामर्शजनकतायां स्वरूपासिद्धिरित्यत आह—तथाचेति। हेतुः साध्याभाववदवृत्तिधूमवत्पर्वतवानिति विशिष्टवैशिष्ट्यबोधीयजनकतायां प्रतियोगिप्रसिद्धिघटितपदपर्यायनिवेशस्फोरकं तन्निवेशस्य निष्प्रयोजनत्वात्। तेन विशेषणतावच्छेदकप्रकारकगुणत्वेन हेतुतामतेपि न तदप्रसिद्धिः। अव्यभिचारपदार्थो इति सामान्यविशेषकाभाव ननु हेतुघटकं। वैयर्थ्यात्। अविवादादिति। अव्याप्यवृत्तितत्तत्संयोगाभावकूटस्य संयोगसामान्याभावव्यभिचारित्वस्य विवादेपि तदतिरिक्तविशेषाभावकूटस्य सामान्याभावव्यभिचारित्वस्य केनाप्यनभ्युपगमादित्यर्थः। तथाच विशेषाभावकूटवान्यदि सामान्याभाववान्न स्यात्तदा सामान्याभावविरोधिमान्स्यादित्येवानुकूलतर्कः। तच पक्षतावच्छेदकसामानाधिकरण्येनापादकवत्ताज्ञानजन्यतया तदवच्छेदेन सामान्याभाववत्तानिश्चये नपयुज्यते। केवलान्वयिसाध्यकानुमितिजनकपरामर्शावृत्तित्वस्य हेतुत्वे स्वरूपासिद्धिरत आह—साध्य इति। केवलान्वयित्वव्यापकं।

स्यादेतद्भेदानुयोगिवाचकं पदान्तरमुपलभ्येत तदेव न। तथाच तत्पदस्यैव तथात्वं वक्तव्यं तथाच कथं न पूर्वोक्तदोषावकाश इत्यत आह—व्याप्तिरिति। तथाच तादृशव्याप्तिपदसत्वान्न दोष इति भावः। अनुषङ्गेणेति। अनुषङ्गो वाक्यान्तरे स्वस्मात्पूर्वपठिते श्रुतस्य पदस्य स्वघटकत्वेनानुसन्धानम्। अतादृशपदानुसन्धानमध्याहार इति विवेकः। नन्वत्र साध्याभाववदवृत्तित्वादिभेदकूटस्य हेतुत्वेऽव्यभिचारविशिष्टवैशिष्ट्यावगाहिबोधजनकतायां तादृशहेतुमत्तानिरुक्ताव्याप्त्यव्यभिचार इत्यतः पर्यवसितहेतुमाह—तथाचेति। अत्रापि हेतुपदप्रयोजनं पूर्ववदेव। अन्यत्रापि पूर्ववद्बोध्यम्॥ घटितेत्ति। एवञ्च

१ ये ये. का. पाठः. २ तत्र इ० का. पा. पंचेति व. पाठे० अ. ३ तावा: का. पाठः. ४ कूटस्येति व. पा. ५ वत्तदवच्छिन्न का. पाठः. ६ अत्र का. पाठः.

दशायां अत्यन्ता(भावा)न्योन्याभावयोः साध्यवद्वृत्तित्वावच्छिन्नप्रतियोगिताकत्वभानासम्भवेन प्रतियोगितया साध्यतदाश्रयविशेषितात्यन्तान्योन्याभाववद्वृत्तित्वावच्छिन्नविषयतायास्तादृशे[2]विशेषदर्श्येनुमितिजनकज्ञानेऽभावादित्यर्थः। एवञ्च तादृशविषयतया शून्यवृत्तित्वमेव अनुमितिजनकतायां दर्शितसाध्यसाधको हेतुरभिमत इति

कृष्णभट्टीय।

ज्ञानकालीनतादृशानुमितिजनकज्ञानेऽव्यभिचारपदार्थावच्छिन्नहेतुविषयताकत्वाभावादित्यर्थ। तद्विरहकालीने ज्ञाने हेत्वसिद्धिवारणाय कालीनान्तम्। व्यतिरेकिण्यपि केवलान्वयित्वज्ञानदशायामव्यभिचाराभान प्रत्यक्षम्॥

अत्राभावे प्रतियोगितासम्बन्धेन साध्यवज्ज्ञानप्रति तद्विषयकत्वसम्बन्धावच्छिन्नसाध्यवत्ताभावज्ञान प्रतिबन्धकमित्यादिकमूह्यम्। साध्यवत्तेत्यादिघटितलक्षणानुरोधेन द्वितीयकेवलान्वयित्वोपादानम्। नन्वनुमितिजनकज्ञाने तादृशविषयताकत्वाभावो न हेतु। स्वरूपासिद्धेस्तादृशज्ञानस्याप्रसिद्धेश्च। नापि तादृशविषयताशून्यानुमितिजनकत्वम् तद्विशिष्टज्ञानञ्च वा। स्वरूपासिद्धेः। अतएव न तादृशविषयताशालिज्ञानावृत्तित्व। अव्यभिचरितत्वहेतुव्यापकसाध्यसामानाधिकरण्योभयज्ञानमादायोक्तदोषात्। तथाभावस्तादृशविषयताशून्यत्व स इति वाच्यम्। विशिष्टवैशिष्ट्यबोधजनकत्वे वाव्यभिचारादित्यत आह—एवंचेति। तादृशविषयता तत्तदव्यभिचारि-

न्यायरत्न।

पर्योस्यनिवेशसूचनाय। तन्निवेशे साध्यहेत्वोरप्रसिद्ध्यापत्ते। विशेषेत्यादि। ननु संयोगविशेषाभावकूटस्य तत्सामान्याभावसाधकत्वस्य न सर्वानुमत। प्राचीनमते तदभावात्। नैव। व्याप्यवृत्तिप्रतियोगिकाभावकूटस्य तत्त्वे विवादाभावात्। ननु कुत्रकुत्रहेतुरसिद्ध इत्याशङ्क्याह—तत्रेति। केवलान्वयीत्यादिमूले केवलान्वयिपदं न वास्तवकेवलान्वयिपरम्। अभावादित्यस्य साध्याभाववद्वृत्तित्वाभावपरतया तत्र तादृशाभावासम्भवात्। यदि तत्त्वेन ज्ञातपर तदा तादृशकेवलान्वयिताकान्ते धूमादौ तादृशाभावासत्त्वाज्ज्ञेयत्वादावसत्त्वाच्च व्याहतिमितराभिति केवलान्वयिपदस्य केवलान्वयित्वग्रहकालीनानुमितिजनकज्ञानपरत्वमभावपदस्य च साध्याभाववद्वृत्तित्वविषयताभावपरत्व चावलम्ब्य व्याचष्टे—साध्येति। तत्र च केवलान्वयिनि निरूप्यनिरूपकभावापन्नतादृशविषयताद्वयसम्भवान् व्याहतिरिति भाव। अत्रात्यन्तान्योन्याभावघटितद्विविधव्यवहारयमिथ्येणात्यन्तान्योन्याभावघटितद्विविधकेवलान्वयित्वप्रदोषाभ्यास।

अथात्यन्ताभावप्रतियोगितान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपकेवलान्वयित्वग्रहो नात्यन्तान्योन्याभावघटितव्याप्तिग्रहे प्रतिबन्धको भवितुमर्हतस्तत्संसर्गकविशिष्टबुद्धौ तदभावप्रकारकज्ञानस्याप्रतिबन्धकत्वात्। साध्यप्रतियोगि

---

१ हेतुविषयतेति त पा २ दृशविशेषीया का. पाठ

नासिध्यादिः । ईदृशदिशाऽग्रिमहेतवोऽपि परिष्करणीयाः ॥

कृष्णभट्टीयं ।

स्वविषयता । दर्शितसाध्यं कूटघटकीभूतप्रत्येकाभावरूपं नासिद्ध्यादिरित्या-
दिना मध्द्वयवैयर्थ्यपरिग्रह । अग्रिमेति । नापीत्यादिमन्थदूषणरूपा. व्यभिचारि-
त्वान्वयिन्यभावादय परिष्करणीया । साध्यनिष्ठाधेयत्वाऽनिरूपकेत्यादिक्रमेण
तादृशप्रतियोग्यधिकरणतासामान्यकत्वावच्छिन्नहेतुविषयताघटितधर्मानव-
च्छिन्नत्वादिसाधका. तादृशहेत्वविषयकज्ञानवृत्तित्वादय इत्यर्थं. । यद्यपीद-
शरीत्या अव्याप्तिदर्शनस्य इतरभेदानुमितौ व्यभिचारवारकतयाऽतिव्याप्तिप्र-
दर्शनस्य च सार्थक्येऽपि असम्भवप्रदर्शनवैयर्थ्यम्, तथापि विरुद्धत्वग्रहणे-
तरभेदानुमितेरनुपपत्ति स्यादिति तत्प्रदर्शनम् । यद्वा व्याप्तौ सामानाधिक-
रण्येन लक्षणग्रहावच्छेदकावच्छेदेनेतरत्वसंशयनिवृत्तिसत्वेऽपि सामानाधि-
करण्येन तत्संशयोऽनुवर्तते, असम्भवे तु सद्वयमपीति विशेषप्रदर्शनाय
पृथक् तदुभयोपादानम् । एवंच सामानाधिकरण्येनेतरत्वसंशयवारणावच्छे-
दकावच्छेदेन लक्षणग्रहोऽव्याप्तिनिरासफलमिति ।

अव्याप्यवृत्तिसाधके दीधितौ अवच्छेदकावच्छेदेनान्वयबोधौत्सर्गिक-
तया अव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेन लक्षणासत्त्वमिति नियमोऽभि-
मेत । यथाव्याप्यवृत्तिसाध्यं यस्य स अव्याप्यवृत्तिसाध्यक तादृशश्चासौ
सद्धेतुश्चेति व्युत्पत्त्या कपिसंयोगी गगनादित्यादौ व्यभिचार इति वाच्यम् ।
तादृशस्य वृत्तिमद्धर्मत्वात् । अन्यथैवमपि कपिसंयोगाभाववान्गुणत्वादित्यादौ
व्यभिचार । यथाव्याप्यवृत्तिसाध्य यत्र तदव्याप्यवृत्तिसाध्यक तत्र सन् वर्त-
मानो यो हेतुरिति व्युत्पत्तेः साध्यनिष्ठाव्याप्यवृत्तितानिरूपकाधिकरणवृत्ति-
हेतुतावच्छेदेनाव्याप्तिरिति निष्कर्षे न दोष इति वाच्यम् । तथासति लाघवा-
देवधर्मोपादानात् । तत्पदघटितस्य तादृशार्थलाभ इत्युक्तौ च कपिसंयोगीत
त्वादित्यादौ निरुक्तोद्देश्यतावच्छेदकविधेयीभावान्तहेतौ अव्याप्तेरलक्ष्य-
त्वेन दुर्वारत्वादसंगति । हेतुपदस्य व्याप्तिमदर्थकत्वेऽपि कपिसंयोगाभाववा-
न्द्रव्यत्वादित्यादेर्नियमविषयस्य साध्यवत्तेदाप्रसिद्ध्या परत्वेनासंग्रहादसंग-
तिरिति चेन्न । न व्याप्यवृत्तिरव्याप्यवृत्तिरिति व्युत्पत्त्या निरवच्छिन्नवृत्तिका-
न्यत्वमव्याप्यवृत्तित्वमित्यदोषात् । गगनत्वाभाववद्वह्निरित्यादौ साध्ये निरवच्छिन्नाव्याप्य-
वृत्तित्वसत्वेऽपि तदधिकरणाप्रसिद्धेर्नोक्तलक्षणासत्वेऽपि क्षति. । हेतुत्वस्य तत्रा-

न्यायरत्न ।

स्वतदवच्छिन्नप्रतियोगित्वसंसर्गकव्याप्तिज्ञानस्यैव लाघवेनानुमितिहेतुतया तादृश-
प्रतियोगितासंसर्गकव्याप्तिज्ञाने निरुक्तैकत्वान्वयित्वग्रहयोरप्रतिबन्धकत्वादिति
चेत । साध्यैतन्त्वाभावाप्रतियोगित्वज्ञानेऽभावेऽपि प्रतियोगिविषया साध्याभावा-
वगाहनस्य तुल्यवित्तिवेद्यतामतसिद्धत्वात्तदवगाहिज्ञानस्य व्याप्तिग्रहप्रतिबन्धक-

कृष्णंभट्टीयं ।

भावात् । नच यत्किंचिज्ज्ञानविषयत्वात् वाच्यत्वादित्यादौ तथात्वेपि सचरलक्षणेन तदव्याप्तेरवारणमिति वाच्यम् । देशनिष्ठावच्छेदकत्वातिरूप-कत्वस्य प्रकृते व्याप्यवृत्तित्वात् ।

यस्तुतस्तु—केवलान्वयिनि पृथग्दोषस्य दर्शनीयतया केवलान्वयिभि-न्नाव्याप्यवृत्तिमध्ये तु सामान्येऽव्याप्तिरित्येव नियमः । केवलान्वयिभिन्नत्व-मन्योन्याभावप्रतियोगितावच्छेदकत्वमिति न कोऽपि दोषः । अव्याप्यवृत्तित्वं स्वाभावसामानाधिकरण्यं नतु निरवच्छिन्नवृत्तिकान्यत्वं । संयोगी द्रव्यत्वा-दित्यादौ नियमभङ्गापत्ते । प्राचांमते द्रव्ये संयोगसामान्याभावासत्त्वेनोद्दे-श्यतावच्छेदकाक्रान्ते तत्राव्याप्त्यभावात् ।

केचित्तु स्वप्रतियोगित्वस्वसमानाधिकरणत्वस्वसमानाधिकरणभेदप्रतियो-गितावच्छेदकत्वैतत्त्रितयसंबन्धेन यत्किंचिदभावविशिष्टत्वमव्याप्यवृत्तित्वं । तृतीयसंबन्धनिवेशात्कपिसंयोगाभाववान्गुणत्वादित्यादेर्न संग्रहः । प्रथम-संबन्धनिवेशादाकाशाभावमादाय द्वितीयसंबन्धनिवेशाद्द्रव्यत्वाभावमादाय च द्रव्यत्वस्याव्याप्यवृत्तित्वेपि च द्रव्यत्वसाध्यकपृथिवीत्वादेर्न संग्रहः । कपिसंयोगी एतत्वादित्यादौ साध्यस्य द्रव्यान्तर्भावेन कपिसंयोगाभाव-सामानाधिकरण्यस्य गुणान्तर्भावेण तत्समानाधिकरणभेदप्रतियोगिताव-च्छेदकत्वस्य प्रतियोगित्वस्य च सत्वेनोक्तत्रितयसंबन्धेन कपिसंयोगाभाव-रूपयत्किंचिदभावविशिष्टत्वासंभवः । एतेन सर्वं प्रमेयमिति यत्किंचिज्ज्ञान-स्यैव विषयतासंबन्धेन साध्यतायां घटत्वादिहेतोर्निरवच्छिन्नवृत्तिकत्वरूप-व्याप्यवृत्तित्वकत्वे ऽव्याप्यवृत्तित्वसाध्यकसद्धेतुत्वेन संग्रहादुत्तरलक्षणस्या-[व्याप्त्]यरयेन तद्दोषतादवस्थ्यम् । विषयतासंबन्धेन यत्किंचिज्ज्ञानवत्तेः केवलान्वयित्वादिति दूषणमनवकाशमित्याहुः ॥

अत्र भेदाव्याप्यवृत्तित्वमते कपिसंयोगाभावसाध्यकगुणत्वादेः संग्रह-णाय संबन्धघटकभेदप्रतियोगितायां केवलान्वयिधर्मानवच्छिन्नत्वं स्वाधिकरणे निरवच्छिन्नवृत्तित्वं वा भेदे निवेश्यम् । पूर्वमते भेदे निरव-च्छिन्नवृत्तिकत्वमिति । एतेनानवच्छिन्नवृत्तिकान्योन्याभावसाध्यकवृत्तिम-द्धेतुसामान्येऽव्याप्तिरिति कपिसंयोगाभावसाध्यकत्वारवनियमोऽपपाद्यः । तथापि जन्य[ज्ञानादि]साध्यके उक्तदोषात् ॥

न्यायरत्न ।

त्वावश्यकत्वमित्यभिप्रायात् । यद्वा प्रतियोगितासमनवच्छिन्नप्रतियोगिताक-साध्यतावच्छेदकावच्छिन्नाभावप्रकारकाभावत्वावच्छिन्नविशेष्यकग्रहदशायां सा-वच्छिन्नप्रतियोगिताकसंबन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाभावप्र-कारकाभावत्वावच्छिन्नविशेष्यकग्रहदशाया चेत्यस्यैव विवक्षितत्वात्तयोश्च ताद्द-

१ दीर्घेतिमिनया मै. पाठः.

कृष्णभट्टीय ।

परेतु स्वसमानाधिकरणाभावप्रतियोगिसाधकसद्धेतावित्यर्थं । स्व हेतु । अभावो भावभिन्न । स्वसामानाधिकरण्ये च कालानवच्छिन्नत्व देयम् । यद्वा निरवच्छिन्नवृत्तिकान्यसाध्यसमानाधिकरणसद्धेतावित्यर्थं । तेन गग नादिसाध्यके न दोष । अन्यज्ञानसाधकवारण प्रागवादिस्याहु । तन्न । रूपवान्पृथिवीत्वादित्यादौ अव्याप्तेरकथनेन न्यूनतोपात्तेन ग्रन्थस्थकालपद विरोधात् । अत्र घटत्वतदधिकरणसंयोगाद्योरन्यतरत्वेन साध्यतायां तत्र क्रिया[दिया]दावव्याप्तिविरहेण ससमीत पुरुषपक्षमेव बहवोऽरोचयन्ते । अतएव गुणत्वाअल्पपरमाणुरूपादिव्यादावव्याप्त्यसत्वेऽपि च क्षतिरिति दिक् । इति अवतरणिका ॥

न्यायरत्न ।

व्याप्तिग्रहप्रतिबन्धकत्वात् । नच दर्शितग्रहयोरभावस्य सामानाधिकरण्येन तादृश भावप्रकारकत्वे तादृशग्रहयोर्न व्याप्तिग्रहविरोधि च । सामानाधिकरण्येन ग्राह्यबुद्धौ सामानाधिकरण्येन तदभावग्रहस्याविरोधित्वात् । अभावत्वावच्छेदेन तादृशा भावप्रकारकत्वे चाहार्यत्वापत्तिरभावांशे साध्यस्यैव भानादिति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायाः एव प्रतियोगितावच्छेदकसम्बन्धतया तेन सम्बन्धेनाभावांशे साध्यस्याभानेनाहार्य ज्ञानत्वनाशात् । ननु केवलान्वयिन्यभावादिसाधनेन केवलान्वयिसाध्यकालीनानु मितिजनकज्ञानवृत्तित्वमभावे कथं तत्र विशिष्टस्योपलक्षितस्य वा हेतुत्व विशिष्टत्वहेतुत्वे स्वरूपासिद्धिर्जनवृत्तित्वविशिष्टस्यानुमितिजनकतायामभावादुप लक्षितस्य हेतुत्वे साध्याभाववदवृत्तित्वविशिष्टवैशिष्ट्यबोधजनकतायां तादृशज्ञा नवृत्तित्वोपलक्षितसाध्याभाववदवृत्तित्वविषयत्वाभावसत्त्वेन साध्यस्य चासत्त्वेन व्यभिचार इत्यत पर्यवसितहेतुमाह—एवञ्चेति । आदिपदेन व्यभिचारपरिग्रह । इति अवतरणिका समाप्ता ।

इति अवतरणिका समाप्ता ॥

---

कृष्णंभट्टीयं ।

दकत्वोपगमेनैतादृशविवक्षाया निष्प्रयोजनकत्वेनाव्याप्तिसंगतेः । गुरोः प्रतियोगितानवच्छेदकत्वमतेऽपि नैतद्विवक्षणमावश्यकम् । गुरुधर्मावच्छिन्नसाध्यकहेतोः केवलान्वयिसाध्यकत्वाक्रान्ततया तत्राव्याप्तेर्वक्ष्यमाण[तया]त्वेन तदुद्धारणानपेक्षणात् । नच गुरुधर्माश्रयस्य कथं केवलान्वयित्वमिति वाच्यम् । हेतुतावच्छेदकसंबन्धानुयोगिनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य गुरुधर्मसाधारण्यात् । अस्तु वा गुरोः प्रतियोगितानवच्छेदकत्वमतमथ तत्रैव साध्याभावपदेनोक्ताभावविवक्षा । तथापि साध्यतावच्छेदकसंबन्धेनैव साध्यव्यापकताविवक्षणेन कपिसंयोगाद्यव्याप्यवृत्तिसाध्यकाव्याप्तिपरिहारेऽपि प्रतियोगिवैयधिकरण्यप्रवेशावश्यकत्वेन संयोगेन द्रव्यत्वाव्याप्यवृत्तितापक्षे संयोगेन साध्यतास्थले तेन संबन्धेन साध्यव्यापकत्वाप्रसिद्धिः । तदुद्धारणाय प्रतियोगिवैयधिकरण्यघटितव्यापकतानिवेशे च कपिसंयोगादिसाध्यकाव्याप्तिः । तादृशसाध्यव्यापकतावच्छेदकरूपावच्छिन्नयत्किंचित्साध्याभावनिवेशे तु कपिसंयोगी द्रव्यत्वादित्यादौ तादृशद्रव्यमात्रसमवेताभावमादायातिव्याप्तिरित्याशयेन दीधितिकृतोऽव्याप्तिकथनं युक्तमेव । नचैकसंबन्धावच्छिन्नत्वस्य विशेषणाविशेषतानवच्छिन्नत्वस्य वा व्यापक(ता)स्वरूपावच्छिन्नप्रतियोगितयोर्निवेशादव्याप्यवृत्तिसाध्यके नाव्याप्तिरिति वाच्यम् । सत्त्वद्गोत्वादानावकस्यामेवलीनत्वात् ।

न्यायरत्नं ।

तद्वारणाय हेतुतावच्छेदकसंबन्धेन वृत्तिमत्त्वस्योपयुक्त्याऽवश्यकतया तद्घटितलक्षणाव्याप्तेरपरिहारात् तदघटितलक्षणाव्याप्तेरेव विवक्षितत्वात्संयोगीसत्त्वादित्यादावव्याप्यवृत्तिसाध्यकत्वेनोद्देश्यतावच्छेदकाक्रान्ते द्वितीयलक्षणेनाव्याप्तेर्वारणात्तत्पदस्य व्याप्तिमदर्थकस्यावश्यकत्वाच्च । नच तथापि संयोगाभावसाध्यकगुणत्वहेतावुद्देश्यतावच्छेदकाक्रान्ते लक्षणासत्त्वविरहादसङ्गतिरिति वाच्यम् । अव्याप्यवृत्तिसाध्यकेत्यस्याव्याप्यवृत्ति साध्यं यस्मिंस्तदव्याप्यवृत्तिसाध्यकं तस्मिन्सन् वृत्तिमान्यो हेतुरित्यर्थकरणाद्गुणत्वादेश्च साध्यनिष्ठाव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वविरहात् ।

अथैवमपि संयोगाभावसाध्यकद्रव्यत्वहेतौ तादृशे द्वितीयलक्षणासत्त्वादसङ्गतिर्दुर्वारैवेति चेदत्र केचित् । अव्याप्यवृत्तिसाध्यकेत्यस्य न व्याप्यवृत्तिरव्याप्यवृत्तिरिति व्युत्पत्त्या निरवच्छिन्नवृत्तिकान्यसाध्यकहेतावित्यर्थः । तथाच संयोगाभावस्य गुणादौ निरवच्छिन्नवृत्तिकत्वेन तदन्यत्वविरहाच्च तत्साध्यकहेतोर्नोद्देश्यतावच्छेदकाक्रान्तत्वमिति वदन्ति । तदसत् । अन्यज्ञानविषयत्वस्य विषयतासंबन्धेन जन्यज्ञानस्य वा साध्यतायां हेतौ निरुक्ताव्याप्यवृत्तिसाध्यके द्वितीयलक्षणासत्त्वेनासङ्गतेस्तथापि दुर्वारत्वात् ।

वस्तुतस्तु—अव्याप्यवृत्तिसाध्यकेत्यत्राव्याप्यवृत्तित्वं स्वसमानाधिकरणत्व-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व स्वप्रतियोगिकत्व-एतत्त्रितयसंब-

कालावच्छेदेन कपिसंयोगाद्यभावसत्त्वादिति भावः । (प्रथमलक्षणं समाप्तम् )

कृष्णम्भट्टीय ।

नन्वेतल्लक्षणपञ्चकस्य भिन्नपुरुषकर्तृकत्वाद्दवतारणदान दीधितिकृताम शुद्ध । एककर्तृकत्व एव तदपेक्षणादिति चेत्सत्यम् । दीधितिकृता अवतारण न कृत । किंतु मणिकृता साध्यवदन्यावृत्तित्वमित्यारभ्य किं न कृतमित्याशङ्का ग्राहकतामपनिनीषु"मधुरेण समापयेत्" इति न्यायमनुसृत्य मधुरस्य पञ्चम लक्षणस्य प्रदर्शयितुं लक्षणचतुष्टयस्य दोषग्रस्तत्व दर्शितमिति । कालेति । वह्निमान्धूमादित्यादावुत्पत्तिकालावच्छेदेन घटाद्यभावस्य हेत्वधिकरणघटता-दौ सत्त्वादित्यपि बोध्यम् । [इति प्रथमलक्षण]

न्यायरत्न ।

विशेषाद्यपि विशिष्टाभावमादायाव्याप्तिसम्भवेनासम्भव एव वक्तुमुचितो ना व्याप्ति । न च घटवान्नित्यज्ञानत्वादित्यादौ लक्षणसमन्वयादसम्भव इति वाच्यम् । तत्रापि नित्यज्ञानत्ववद्विशिष्टाभावमादायाव्याप्ते । यद्यपि नित्यज्ञाना-न्यत्वविशिष्टघटोऽपि नित्यज्ञाने स्वीक्रियते, तथापि व्याप्यवृत्तिसाध्यकेऽपि क्वचि दव्याप्तिसम्भवेन तदुपेक्षा निर्बीजा । न च साध्याभावपदस्य साध्यतावच्छेदका वच्छिन्नाभावपरतया न विशिष्टाभावमादाय दोष इति वाच्यम् । तथा सति साध्याभावपदस्य साध्याभावीयनिरवच्छिन्नाधिकरणपरता स्वीकृत्याव्याप्तेरपि वारणसम्भवात् । ननु यथाश्रुताभिप्रायकता स्वकृते वक्तुमसम्भवस्यैव प्रस ङ्गात् । (अत्रेदं समाधानं ) प्रतियोगितासम्बन्धव्याप्तिज्ञानस्यानुमिति हेतुतयाऽभावांशे साध्यस्य प्रतियोगितासंसर्ग एव निवेशनीय । तत्र च स्वलक्ष-णोपकारीत्या साध्यविशेषणीभूतसाध्यतावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धेनैव प्रति-योगिता भासत इति विशिष्टमविशिष्टसाध्यस्याभावमादाय न दोष । एवं चात्र नाव्याप्तिसम्भवो गुरुधर्मावच्छिन्नसाध्यकाव्याप्तिवारणाय साध्याभावपदेन साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकस्यैवाभावस्य निवक्षणीयतया तत्र व्यापकतायां प्रतियोगिवैयधिकरण्यानिवेशेन संयोगाभावस्य लक्षणघटक त्वात्संयोगाद्यव्याप्यत्वाभावमादाय लक्षणसमन्वयनादित्याशङ्का तादृशस्थलस्य हेतुताव-च्छेदकरूपवत्त्वाद्गुणोभिनिष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकरूपवे त्त्वादिसाध्यकस्यैव तत्राव्याप्तेरिष्टत्वात्साध्याभावपदेन तादृशाभावविवक्षाया निष्प्रयोजनकत्वात् । तथा विवक्षणेऽपि प्रथमलक्षणोक्तदिशाऽव्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशावश्यकतया संयोगाभावस्य लक्षणघटकत्वादव्याप्ति रस्त्येवेति समाधान देय । यथाश्रुतलक्षणनाक्यलक्ष्य एवार्थे दूषणदानात् । आद्याद्येति । साध्यवत्ताप्रविरोधितानियामकसम्बन्धेनैव साध्याभाववत्ताया निवेशनीयतया निरवच्छिन्नदैशिकविशेषणतायास्तथात्वे व्याप्तिविरहाद्व्याप्तेरहे-त्वनुक्ताऽव्याप्तिमात्रस्योक्तेर्युक्तिरिति केचित् । गाद्याधर्यां कपिसंयोगीति । संयोगसामान्याभावस्य द्रव्ये सविवादतया कपिपदम् । [इति प्रथमलक्षणम् ।]

(अथ द्वितीयलक्षणं) साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारये अभेदसम्बन्धेन साध्यवद्भिन्नीयं यत्साध्याभावाधिकरणं, तद्वृत्तित्वमर्थः स्यात्। तथा सति तद्घटकीभूतस्य अभेदसम्बन्धेन सा-

कृष्णभट्टीय।

[अथ द्वितीयलक्षणं] कर्मधारय इति। तत्पुरुषमपेक्ष्य लाघवं, अधिकरणभेदेनाभावभेदमतानाश्रयणं चेत्याशयः। अभेदेति। एतच

न्यायरत्न।

[अथ द्वितीयलक्षणम्।] ननु दीधितिकृता तत्पुरुषपक्षोऽभिमतः कर्मधारयपक्षे लाघवादधिकरणभेदेनाभावभेदानभ्युपगमाच्चेत्याशयेनाह—साध्यवद्भिन्नो यः साध्याभाववानित्यादि। अभेदेति। एतच पुरुषमंग्या

साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमित्यर्थः ।

---

ध्यवद्भिन्नीयं यत्तद्वृत्तित्वस्यैव लक्षणत्वसंभवात्साध्याभाववत्त्वांशस्य वैयर्थ्या[1]पत्तिरतः साध्याभावपदेन साध्यवद्भिन्नपदस्य सप्तमीतत्पुरुषं व्याचष्टे—साध्यवद्भिन्न इति ॥ तथाच साध्यवद्भिन्नवृत्तिर्यः साध्याभावः तद्वद्वृत्तित्वमर्थः । तत्र पूर्ववदभेदेन साध्यवद्भिन्न[3]पदार्थविशेषितधर्म्य[4]वृत्तित्वादेर्न घटकता, वृत्त्यादिविशेषणतयैव साध्यवद्भिन्नस्य निवेशादिति न साध्याभावांशवैयर्थ्यमिति भावः । अभावे

कृष्णंभट्टीयं ।

गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमङ्गीकृत्य । तेन साध्यवद्भिन्नवृत्तित्वस्यैव लघुत्वेऽपि न क्षतिः । वैयर्थ्यापत्तिरिति । गुरुत्वलक्षणघटकत्वेनेति न्यायात् मनुष्यवत्स्थाने संबन्धिपदं योज्यम् । तेन प्रकृतसमभिव्याहारेऽपि न दोषः । नच साध्याभावांशनिवेशेन यथासंनिवेशोऽस्त्विति वाच्यम् । भावो गुरोरित्यव्यापकस्य सर्वमते स्वभाव एवावच्छेदकत्वात् योगतः साध्याभावघटितस्यैव साध्यव्यभिचारित्वबाधद्वयोध्यत्वसंभवात् । तद्घटितस्य न बोध्यत इति चेत् । व्याचष्टे विवृणोति । तत्समानार्थकयावत्स्वरूपविवरणैकदेशोऽर्थं स्वघटकज्ञानजन्यत्वरूपाद्वितीयार्थान्वयः । साध्यवदिति ।

न्यायरत्नं ।

भावप्रतियोगितावच्छेदकत्वमङ्गीकृत्य तेन साध्यवद्भिन्नवृत्तित्वापेक्षयाऽभेदेन साध्यवद्भिन्नविशिष्टसाध्याभाववद्वृत्तित्वस्य गुरुत्वेनानवच्छेदकतया न तदवच्छिन्नाभावरूपलक्षणस्यायथार्थ्यप्रसिद्धिः । साध्याभावांशवैयर्थ्यमिति । तद्वैयर्थ्ये च तद्घटितधर्मस्य व्याप्यतावच्छेदकत्वासंभवादितरभेदानुमानासंभवेनानुमितिलक्षणघटकत्वासंभवात्तदुपोद्घातसङ्गत्या तन्निरूपणासंभवादिति भावः । अथात्र व्याप्यतावच्छेदकत्वप्रयोजकव्यर्थविशेषणघटितत्वं न संभवति स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्यैव तस्य नीलधूमत्वादौ दृष्टत्वात् । प्रकृते च साध्यवद्भिन्नाधिकरणवृत्तित्वपर्याप्तावच्छेदकताकाभावादन्य एव साध्याभावघटितरूपपर्याप्तावच्छेदकताको भव इति । तच्छरीरे साध्याभावाघटितरूपावच्छिन्नाभावस्यानिवेशादेतल्लक्षणे गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वावश्यकत्वाच्च । नच स्वसमानाधिकरणेत्या-

---

१ वैयर्थ्येत्यारभ्य पदस्येत्यन्तं ब. पा. नास्ति. २ पेनेति त. पा. ३ भिन्नीयावृत्तित्वादेरिति ब. पा. ४ तादृशपदार्थस्य धर्मिण्यविशेषणत्वात्. रा. त. पा. अ.

## न्यायरत्नं ।

तदपरे न क्षमन्ते । वह्नीजं तु सिद्धान्तेऽपि क्वचित्साध्याभाववद्वृत्तित्वस्य व्यभिचारपदार्थत्वसंभवात्तादृशस्थले साध्यवद्भिन्नांशवैयर्थ्यं दुर्वारं । क्वचित्साध्याभाववत्त्वांशवैयर्थ्यं, यथा घटत्वाभावादौ साध्ये क्वचित्साध्याभाववान्तरवैयर्थ्यं, यथा घटत्वभेदादौ साध्ये । एवं सति व्याप्तेरपि स्वरूपभेदेन नानात्वापत्तिः । न चेष्टापत्तिः केवलान्वयिनि साध्यसामानाधिकरण्यस्य व्याप्तित्वसंभवेन केवलान्वय्यभावादिति ग्रन्थसङ्गतेः । अपि च प्रथमं विशिष्टसत्त्वाभाववतश्च जातेः रीत्यादावव्याप्तिवारणाय साध्यवद्भिन्नवृत्तिसाध्याभाववन्निरूपिताधेयतासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावनिवेशस्यावश्यकतया तादृशोभयवत्तादृशाधेयतासामान्यमेव व्यभिचारपदार्थो वाच्यस्तत्र वृत्तिसाध्याभाववत्त्वांशवैयर्थ्यं दुर्वारमुक्तोभयरूपवत्साध्यवद्भिन्ननिरूपिताधेयत्वसामान्यस्यैव व्यभिचारपदार्थत्वसंभवात् ।

अत्र केचित् । साध्यवद्भिन्नश्चासौ साध्याभावश्च साध्यवद्भिन्नसाध्याभाव इति कर्मधारय पूर्वोक्तलक्षणे च साध्यपदं स्वप्रतियोगिकत्व स्वसामानाधिकरण्य उभयसंबन्धेन । केवलसामानाधिकरण्यसंबन्धेन साध्यवत्त्वनिवेशे घटाभावादीनां साध्यवदन्यत्वविरहेणैव लक्षणाघटकतया साध्यपदं व्यर्थं स्यादिति स्वप्रतियोगिकत्वनिवेशः । अथ "प्रक्षालनाद्धी"ति न्यायमाश्रित्य तेनैवेति चेन्न । स्वसामानाधिकरण्यमात्रस्य परंपरात्वेन संबन्धत्वविरहात्स्वसामानाधिकरण्यविशिष्टप्रतियोगित्वस्यैव संबन्धतया तत्सार्थक्यात् । यथासमवायिकारणताद्वैविध्यानुरोधेन सामानाधिकरण्यस्य संबन्धतया आवश्यकत्वमिति वाच्यम् । स्वसमवायिसमवेतत्वात्मकसामानाधिकरण्यस्य तदनुरोधेन संबन्धत्वस्वीकारेऽपि सकलसामानाधिकरण्यानां तथात्वे मानाभावात् । अत्र चाऽभावत्वं भावत्वादिसाधारणमभावमात्राधिकरणकाभावस्याधिकरणस्वरूपत्वपक्षे सर्वेषामभावस्य सामानाधिकरण्यसंबन्धेन साध्यवत्त्वात्तदन्याभावाप्रसिद्धेः । स्वप्रतियोगिकत्वनिवेशस्य निवेशोऽप्यप्रसिद्धिरिति तु न शङ्क्यम् । तन्निवेशस्य साध्यसामानाधिकरण्यावच्छेदकस्वप्रतियोगिकत्वस्य सत्त्वतया विशेषफलकत्वात् । अभावभेदाभावस्याभावस्वरूपत्वेऽप्यभावभेदप्रतियोगिकत्वावच्छेदेन तत्सामानाधिकरण्यानभ्युपगमात्तस्य निरुक्तसंबन्धेन साध्यवद्भिन्नत्वासंभवे । एतेन साध्यसामानाधिकरण्यघटकवृत्तित्वं यदि येनकेनचित्संबन्धेन निवेश्यते तदा वह्निमान्धूमादित्यादौ वह्न्यभावादेरपि कालिकसंबन्धेन साध्यवद्वृत्तितया साध्यवदन्याभावाप्रसिद्धिरतः स्वरूपसंबन्धेनैव तन्निवेश्यं । तथा च पर्वतत्वाभावमादाय साध्यपदसार्थक्यसंभवे स्वप्रतियोगिकत्वं व्यर्थम् । न च स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेनैव साध्यवद्वृत्तित्वं वक्तव्यमिति वाच्यं कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववानात्मत्वादित्यादौ तादृशेन कालिकेन साध्यवद्वृत्तित्वाप्रसिद्धेरिति निरस्तम् । अखण्डाभावघटनतया

भेदकानीत्यनेन दीधितिकृन्निराकरिष्यति। अथवा साध्याभावपदं अनुयोगित(विशेष)संबन्धेन साध्यीयपरम्। अभावीयविलक्षणानुयोगितात्वभावेनैवाभावपदम्। ननु अभावत्वमपि निवेश्यं[3] प्रयोजनाभावात्।

कृष्णभट्टीय।

नैव भेदकत्वस्य लक्षणकर्तृसंमतत्वादेवेत्यर्थः। अग्रिमग्रन्थस्वारस्यं भेदकत्वेन प्रसक्तं तस्य गगनाभावादावसत्त्वात्तु भेद इति भावः। ननु इदन्त्वसामानाधिकरण्यत्वेनैवाधिकरणपदार्थानामप्यभावभेदकत्वं लक्षणकर्तृसंमतम्। अत एवाग्रे दीधितौ अभाव एव न निवेशितः इत्यस्य अन्यथा व्याप्यवृत्त्यभाव एवेति मूलस्येति। भावभिन्नमात्रस्यैवाधिकरणभेदात्तेदमनुपपन्नं साध्यभेदमनुसृत्य साध्यपदवैयर्थ्यं परिहरति—अथवेति। साध्याभावपदं साध्याभावेतर साध्यपदम्। अनुयोगितेति। सम्बन्धसाधारणानुयोगितासमवेतसाध्यवन्निष्ठप्रतियोगितासमवायवृत्तिधूमस्य वृत्तेरव्याप्तिरतो विशेषपदम्। भावभिन्नस्वरूपानुयोगितानिवेशे घटत्वाभावसाध्यकाव्याप्तेः। विलक्षणेति। भावाभावसाधारणाभावत्वरूपसम्बन्धस्वानुसेरित्यर्थः। तादृशविलक्षणसंबन्धेनान्यत्र साध्यीयत्वाभावादेव नातिप्रसङ्गः। एतेन

न्यायरत्न।

भावत्वघटितत्वाभावेनेत्यर्थः। तथा च हेतोः पक्षधर्मताविरहात्त भेदसिद्धिरिति भावः। ननूक्तहेतोः पक्षवृत्तित्वाभावेऽपि गगनाभावस्य क्वचिद्वृत्तित्वघटितत्वविरहे सति घटाद्यवृत्तित्वाभावात्त्वृत्तिधर्मत्वात् घटत्वाभावघटत्वाभावान्यतरत्वसमनियतानुमानेनाभावसाध्याधिकरणभेदेन भेदसिद्धिरित्याशङ्कते—अत एवेति। यस्माच्च साध्यीयत्वं न येन केनचित्सम्बन्धेन। अतिप्रसङ्गात् किन्त्वनुयोगितात्वविलक्षणसम्बन्धेन। तथा च भावत्वनिवेशो व्यर्थ इत्यत्र स्वाऽभावपदमेव तादृशानुयोगितात्वसम्बन्धलाभायेति वक्तव्यम्। तथा च विलक्षणानुयोगितासम्बन्धेन साध्यीयत्वनिवेशाद्वृत्तिरभावमात्रस्याधिकरणभेदेन भेदपक्षेऽपि सुघटत्वेत्याशयेनाह—अथवेति। साध्यीयपदम्। लक्षणया साध्यविशिष्टबोधकम्। यद्यप्यनुयोगिताविशेषरूपाभावत्वस्य भावाभावसाधारणत्वमवश्य वक्तव्यम्। अन्यथा घटाभावाभावो घट इति घटेऽभावत्वव्यवहारो न स्यात्। इत्थं चाभावपदस्यानुयोगिताविशेषविशिष्टे लक्षणया अभावार्थकत्वेऽपि साध्यपदार्थस्यसम्बन्धलक्षणिकत्वमनुचितम्। तथापि साध्याभावेत्यत्र तदनुपपत्त्या पूर्वपदे लक्षणाया आवश्यकत्वात्साध्यपदस्य विलक्षणानुयोगितासम्बन्धेन साध्यविशिष्टे लक्षणाया आवश्यकत्वे, तेनैव निर्वाहेऽभावपदार्थविवक्षाया अनुपयोग इति भावः। अभावीयविलक्षणानुयोगितेति। केवलानुयोगिता-

१ निरस्यति त. पा. २ निविशते व. पा. ३ निवेशयेत् का. पा. ४ अत एव तदाऽसत्त्वभाव एव न निवेशितः इति निरस्यति—का. पाठः।

इत्थंचं तादृशविलक्षणसम्बन्धेन यः साध्यीयः तद्वद्वृत्तित्वमित्येवार्थः । तत्रच साध्यस्य यत्पदार्थाविशेषणत्वे ह्रदादिवृत्तिप्रमेयत्वा-

कृष्णभट्टीय।

भावाभावसाधारणाभावप्रवेशे अव्यावर्तकता । सप्तमपदार्थमात्रवृत्तित्वप्रवेशेऽभावसाध्यकाव्याप्तेरिति निरस्तम् । प्रमेयत्वादिति । नचात्र साध्यवद्भिन्नवृत्तित्वं न सम्बन्धसामान्येन यत्किंचित्सम्बन्धेन वा । तथा सति कपिसंयोगी एतत्वादित्यादौ कपिसंयोगाभावस्य कालिकादिसम्बन्धेन साध्यवद्भिन्नगुणादिवृत्तितयाऽव्याप्ते । नापि विशेषणताविशेषसम्बन्धेनाभावसाध्यकाव्याप्ते । अपि तु साध्यताग्रहविरोधिताभिगामकसम्बन्धेन तथाच प्रमेयत्वादिकमादाय कथमव्याप्ति । एतत्कल्पे अभावमात्रभेदश्च गगनाभावादिकमादाय न सेति वाच्यम् । प्रकृतप्रकारकप्रमाविशेष्यत्वाभाववान्धूमादित्यादावव्याप्ते ।

केचित्तु वस्तुलाघवादिना साध्यवद्भिन्नत्वासौ साध्याभाववानित्येव कर्मधारय एवोचित । साध्यत्वं च स्वप्रतियोगिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन । एवञ्च प्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं च न देयमिति लाघवम् । एवञ्च साध्यवद्भिन्नसाध्याभावाप्रसिद्ध्यैव केवलान्वयिन्यभावादिति मूलसङ्गति । ननु साध्यतावच्छेदकीभूतधर्मसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धिरिति । घटाद्यभाववारणाय साध्यो[पक्षो]पादानम् । नचैवं साध्यपदसार्थक्याय स्वप्रतियोगिकत्वनिवेशे "प्रक्षालनाद्धी ति न्यायेन ग्रस्त । सामानाधिकरण्यस्य विशिष्टसत्तानियामकतया तद्विशिष्टानुयोगिताविशेषस्यैव सम्बन्धतया

व्यापकत्व ।

सम्बन्धेन साध्यीयपरत्वे वह्निमान् धूमादित्यादौ तादात्म्यसमवायवृत्तित्वस्य धूमे सत्त्वादव्याप्ति स्यादतो विलक्षणेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितानिरूपितत्वं तदर्थ । अभावपदार्थश्च तादृशांशलक्षणानुयोगितावान् इति चेत्, अभावपदसमभिव्याहृतपदार्थस्य विलक्षणानुयोगितया स्वार्थविशिष्टबोधकत्वस्य व्युत्पत्तिसिद्धत्वात् । अन्यथा संयोगो घटाभाव इति व्यवहारापत्ते । नच भाववाचकपदसमभिव्याहृताभावपदस्य भावभिन्नत्वबोधकतायामतिप्रसङ्ग इति वाच्यम् । तथापि विषयिताघटत्वाभावाभाव इति व्यवहारापत्तेर्दुर्वारत्वात् ॥

ह्रदादिवृत्तिप्रमेयत्वादिमतीति ॥ अथास्मिंल्लक्षणे साध्यताग्रहविरोधितानियामकसम्बन्धेनैव साध्यवद्भिन्नवृत्तिसाध्याभाववत्तायाः अग्रे निवे

१ साध्यवद्भिन्नवृत्तित्वं इति वा क्वचित् २ साध्यपदस्य च पा ३ पूर्वनिश्चमकतया वा पाठ

कृष्णंभट्टीयं।

स्वप्रतियोगिकत्वनि[प्र]वेशात्। तावन्मात्रोक्तौ च साध्यवद्भिन्नसाध्याभावाप्रसिद्धिरतः सामानाधिकरण्यमुपात्तम्।

वस्तुतस्तु—स्वसमानाधिकरणत्वमात्रसंबन्धः। ननु स्वप्रतियोगिकत्वमपि। वैयर्थ्यात्। साध्यपदोपादानं च तत्संबन्धत्वलाभार्थमेवेति स्ववृत्तिसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं तदर्थः। तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः। साध्यादिवारणाय अभावपदम्। एवं चात्राभावभेदमतादरणं निरर्थकमेव। नचाव्याप्यवृत्तिसाध्यके उक्तसंबन्धेन साध्यवतो द्रव्यवृत्तिसंयोगत्वाभावादन्य एव साध्याभावः। एवं कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववानात्मत्वादित्यादौ तादृशानित्यवृत्तेराकाशाभावादन्य एव नित्यवृत्तिः साध्याभाव इति लक्षणसमन्वयो वाच्यः। एवं च कालिकसंबन्धावच्छिन्नतद्वत्तायाः साध्याभावत्वोपगमेऽप्यनावश्यक इति वाच्यम्। तन्मतादरेऽपि प्रथमे गुणासमवेताभावं द्वितीये जन्यावृत्त्यभावं चादाय लक्षणसमन्वयसंभवात्। यत्तु सर्वत्र गगनघटितोभयाभावं स्वाधिकरणसंबन्धेन साध्याभावं च विपक्षमात्रवृत्तिमादाय साध्यवद्व्यतिव्याप्ती। अधिकरणभेदेनाभावभेदादभावभेद इति कथनं तत्किमर्थमिति ब्रूमः।

न्यायरत्नं।

शनीयतया वह्निसाध्यके तादृशेन दैशिकविशेषणतासंबन्धेन प्रमेयत्ववतोऽप्रसिद्धत्वेन न तदादायासंभव इति चेन्न। दैशिकविशेषणतायाः स्वरूपत्वेनैव संसर्गत्वात्स्वरूपसंबन्धेन तादृशेन प्रमेयत्ववत्त्वमादायासंभवापत्तेः। न च तथापि नासंभवः। संभवति विषयितासंबन्धावच्छिन्नप्रतियोगिताके घटाभावादौ साध्ये घटत्वादौ तादृशेन विषयितासंबन्धेन साध्यवद्भिन्नवृत्तिनः तस्यापि हेत्वधिकरणेऽसत्त्वाल्लक्षणसमन्वयसंभवादिति वाच्यम्। विषयितासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य विषयितायाः वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेनाप्रसिद्ध्या तत्साध्यकानुमानासंभवादित्यभिप्रायात्। न च तथापि काले-

---

( वह्निज्ञानविषयत्वविषयीभूतानोर्वं विषयः ) वृत्तौ साध्याभाववत्तोऽव्ययानुपपत्तेः। अव्ययीभावसमासस्य अव्ययतया तेन सह समासान्तरासंभवाच्च। नचुपाध्यादिरूपान्वये विशेषणानामेव समस्यमानत्वेन परिगणितत्वात्। वस्तुतस्तु साध्याभाववतो न वृत्तिर्यस्येति निपदव्यधिकरणबहुव्रीह्यनन्तरं त्वप्रत्ययः। साध्याभाववत इत्यत्र निरूपितत्वं षष्ठ्यर्थः अन्वयश्चास्य वृत्तौ। तथाच साध्याभावाधिकरणनिरूपितवृत्त्यभावत्वमव्यभिचरितत्वमिति फलितम्। नच व्यधिकरणबहुव्रीहिः सर्वत्र न साधुरिति वाच्यम्। अयत्र हेतुः यत्र व्यधिकरणं विनापि संभावयितुं शक्यते तत्रैव। साध्याभाववद्वृत्तिरित्यादौ बहुव्रीहिं विना गत्यन्तराभावेनात्रापि व्यधिकरणबहुव्रीहेः साधुत्वात्।

१ अनुरोधात्तत्क्षेपो दुर्वार. इति मै. पाठः.

कृष्णभट्टीय ।

अभावभेदमते सर्वत्रैव साध्यसामान्याभावादिकमादाय लक्षणसमन्वयसम्भवाच्च । कालिकसम्बन्धवारणाय साध्याभावाधिकरणत्वं साध्यसामानाधिकरण्यघटकवृत्तित्वं चात्मीयविशेषणतासम्बन्धेन निवेश्यम् । एतदर्थमेव साध्याभावपदम् । तद्घटकसाध्यवत्त्वं साध्यतावच्छेदकसम्बन्धेन । अभावसाध्यके च विपक्षावृत्त्यभाव साध्यवत्त्वप्रकारकप्रमाविषयाभाव एव वा लक्षणघटक । साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेन तन्निवेशे तु तादृशाकाशाभावाभावसाध्यकेऽव्याप्तिः । साध्यवति तेन सम्बन्धेन वृत्तेरप्रसिद्धेः । एवञ्च पटघटान्यतराकाशसंयोगान्यतराभावसाध्यके घटाकाशसंयोगात्मकसाध्याभावमादायाव्याप्तिरिति न शङ्क्या । घटत्वादिरूपसाध्याभावस्य निरुक्तसम्बन्धेन साध्यवन्निष्ठत्व विशेषणतयाऽधिकरणाप्रसिद्धावपि घटवृत्त्यभावमादायैव लक्षणसङ्गतेरित्याहुः ।

अन्ये तु स्वप्रतियोगिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन साध्यवद्भिन्नत्वं न युक्तम् । सामानाधिकरण्ये यदि वृत्तित्वं येन केनापि सम्बन्धेन तदा वह्न्यभावस्य कालिकसम्बन्धेन साध्यवृत्तित्वादव्याप्तेः । यदि स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसम्बन्धेन तदा कालिकसम्बन्धावच्छिन्नाकाशाभावाभावसाध्यके तथाविधकालिकसम्बन्धेन साध्यवद्वृत्तित्वाप्रसिद्ध्याऽव्याप्तिः । यदि विशेषणतासम्बन्धेन साध्यवति दैशिकविशेषणतया वृत्तित्वेऽपि साध्यप्रतियोगिक निरुक्तवृत्तित्वावच्छिन्नाभावमादाय लक्षणसङ्गतिः, तदा द्रव्यत्व पर्वत वह्न्यादिकमादायाव्याप्तिवारणाय साध्यपदावश्यकतया स्वप्रतियोगिकत्व-वैयर्थ्यात् । दर्शितकालाकाशाभावाभावसाध्यके आकाशाभावस्य साध्यतावच्छेदकसम्बन्धेन साध्यवति दैशिकविशेषणतया वृत्तित्वेऽपि साध्यप्रतियोगिकमात्रवृत्तित्वावच्छिन्नाभावमादाय लक्षणसङ्गतेश्च । न च स्वप्रतियोगिकत्व त्याज्यमेवेति वाच्यम् । तथापि पर्वतावृत्त्यभाव लाभेन पक्षतावच्छेदक साध्यप्रतियोगिकमादाय प्रसिद्धानुमानाव्याप्तेः । एतादृशरीत्या गौरवाच्च । वस्तुतस्तु—महानसीयवह्न्यभावस्य कथं व्यावृत्तिः । यादृशसाध्यप्रतियोगिकत्वं न तादृशसाध्यवद्वृत्तित्वं यादृशसाध्यवद्वृत्तित्वं न तादृशसाध्यप्रतियोगिकत्वमित्युभयसम्बन्धेन साध्यवदन्यत्वात् । यदि च साध्यतावच्छेदकविशिष्टान्यत्वं तत्र निवेश्यम् । वैशिष्ट्यं च स्वाश्रयप्रतियोगिकत्व स्वाश्रयवद्वृत्तित्वोभयसम्बन्धेन तदा साध्यतावच्छेदकवत्त्वघटितस्य साध्यवद्भिन्न साध्याभाववदवृत्तित्वरूपमूलोक्तलक्षणपरिष्कारस्यासम्भवाद्दीधितिकृता तद-नादृतमित्याहुः ।

---

१ वृत्तितया मे पाठ  २ विशेष मे पु अधिकम्  ३ भावात् इति मे पाठ
४ दर्शितेति लक्षणसङ्गते [illegible] पाठः मे पुस्तके न दृश्यते

विमति[1] पर्वतादौ हेतोर्वृत्तेरसंभवः स्यादिति तन्निवेशः । अत्रच साध्याभावः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः । अन्यथा वह्निमान्धूमादित्यादौ ह्रदादिनिष्ठमहानसीयवह्नित्वाद्यवच्छिन्न-

कृष्णंभट्टीयं ।

परे तु, उक्तयुक्तिभ्यां साध्यवद्भिन्नश्चासौ साध्याभाववांश्चेत्येव कर्मधारयः । साध्यवद्भिन्नत्वं च स्वप्रतियोगिमद्भिन्नत्वम् । न च घटत्वकपिसंयोगान्यतराभाववानात्मत्वादित्यादौ कपिसंयोगरूपसाध्याभावस्याधिकरणे आत्मनि गुणसामान्याभावस्वरूपप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वसत्त्वादव्याप्तिरिति वाच्यम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं साध्यतावच्छेदकावच्छिन्नतादृशप्रतियोगिताकाभावाधिकरणमिति विवक्षितत्वात् । तार्णतार्णीमयाभावादिवारणाय साध्यतावच्छेदकावच्छिन्नत्वनिवेशः । साध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकभेदवान्दलद्वयार्थः । तथाच साध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकभेदघटितपक्षमाधस्तादेऽतिलाघवमित्याहुः । महानसीयेति । महान-

न्यायरत्नं ।

कसंबन्धावच्छिन्नप्रतियोगिताकघटाभावे साध्ये आत्मत्वादौ लक्षणसमन्वय. तादृशेन कालिकेन साध्यवद्भिन्नवृत्तेः कस्यापि हेत्वधिकरणेऽभावादिति कथमसंभव इति वाच्यम् । विषयितकालिकादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तत्संबन्धावच्छिन्नाधिकरणत्वाभावरूपत्वात्स्वरूपसंबन्धस्यैव साध्यतासङ्ग्रहविरोधितानियमतया प्रमेयत्वादिकमादायासंभवसङ्गमात् । वस्तुतस्तु अभाववत्तामहेऽभावाभाववत्ताज्ञानस्य स्वरूपसम्बन्धेनैव विरोधित्वमिति कूटघटिते ग्रन्थकृदुक्तताभिप्रायेणेदमिति तत्त्वम् । अन्यथेति । अथ प्रतियोगितयाऽनुयोगितया वा साध्यविशिष्टस्यैवाभावस्य लक्षणे निवेशनीयतया केवलप्रतियोगितायास्त्वनिरूपितानुयोगितायावा संसर्गत्वे नास्तीति महानसीयवत्त्वभानविषयिण्या वह्नि-

---

१ पक्षतावादिति का. पु. नास्ति.

२ साध्यवद्भिन्नश्चासौ साध्याभाववांश्चेति कर्मधारये साध्याभाववत्पदवैयर्थ्यापत्तेः । अतः सप्तमीसमासः कृतः । नच तत्रापि साध्यवद्भिन्नेऽभाव इत्यास्तां किं साध्यपदेन अधिकरणभेदेन अभावभेदवादिना मत एतल्लक्षणकरणात् । गगनाभावादिकमादायाव्याप्तिविरहादिति वाच्यम् । स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यवद्भिन्ने वर्तते यः समवायसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावः तद्वति हेतोर्वृत्तितयाऽव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभाव साध्यपदमिति जगदीशः । अत्रेयमाशङ्का । एवं सति स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारयः कथं परित्यक्त इति विभावनीयम् ।

प्रतियोगिताकवह्न्यभावस्य धूमवति सत्त्वेन, पृथिवीत्वाभावद्रव्यत्वा-भावान्यतरवान् जलत्वादित्यादौ साध्यवद्भिन्नपृथिव्यादिनिष्ठद्रव्यत्वा-द्यात्मकसाध्यप्रतियोगिकाभावस्य जलादौ सत्त्वेन चाव्याप्त्यापत्तेः[१] । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनापि, प्रतियोगिता विशेष-णीया । अन्यथा ह्रदादिवृत्तिसमवायादिसम्बन्धावच्छिन्नप्रतियोगि-

कृष्णम्भट्टीय ।

त्वीयविशिष्ट वह्न्यभावस्य तदवच्छिन्नाभावस्तु साध्यस्यैवेत्यवच्छेदकतापर्याप्त्यु पादानेऽपि कथतानवकाश । द्वितीयलक्षणानुरोधेन ह्रदादिनिष्ठति । एव मग्रेऽपि । साध्यतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियो गितानिवेशे, अभावमात्रभेदमते चाह—पृथिवीत्वेति । अन्यतरत्व। वच्छिन्नाभावस्य पृथिवीत्वरूपत्वादतिरिक्तत्वाद्वा वाच्यासि । अथ

माथुरस्य ।

नास्तीति प्रतीत्यापत्तेर्वह्नित्वावच्छिन्नप्रतियोगितायास्तन्निरूपितानुयोगितायाः वा स्वसंसर्गतया भानमावश्यकमिति प्रयोजनान्तरान्वेषण कुत इति चेत् । अत्र केचित् । साध्यत्वस्य प्रतियोगितावच्छेदकत्वसम्भवात्साध्यतावच्छेदकनिवेशन मनुचितमित्यनिष्टस्य तन्निवेशस्य प्रयोजनान्तरान्वेषणमित्याहुः । तदसत् साध्य त्वस्य प्रकृतानुमितिविधेयत्वरूपस्यानुपस्थितिदशायामप्यनुमितेरानुभविकतया साध्यत्वनिवेशासम्भवान्मद्दानरीयवह्न्यभावमादाय लक्षणासत्त्वप्रसङ्गाच । अथ साध्यतावच्छेदकत्वनिवेशेऽपि पूर्वदोषतादवस्थ्य शङ्क्यम् । तत्परिचितवह्नित्वा-दीना विशिष्यैव निवेशात् ॥ अपिच विशिष्टसत्तावान् जात्यधिकरणत्वादित्यादौ साध्यत्वावच्छिन्नाभावस्य जात्यादावेव वर्तमानतयाऽतिव्याप्तेः । नच प्रमात्मक ानुमितिविधेयत्वमेव साध्यत्वमिति वाच्यम् । एव सति साध्यतावच्छेदकान वच्छिन्नत्वनिवेशापेक्षया गौरवापत्तेः । वस्तुतस्तु प्रतियोगितायाः प्रकारतया निवेशेऽपि साध्यतावच्छेदकावच्छिन्नत्व निवेश्यमित्यभिप्रेत्याव्याप्तिवारकतयापि तस्य सार्थक्यप्रकाशनमभिप्रेत्य वा प्रयोजनान्तराभिधानमिति ध्येयम् ॥

अधिकरणभेदेनाभावभेदेत्याह—पृथिवीत्वाभावद्रव्यत्वाभावान्यतरे ति । एवमुत्तरत्रापि स्थलान्तरानुसरणे बीज बोध्यम् । अव्याप्त्यापत्ते रिति । अभावाभावाभेदपक्षेऽसम्भव एव वक्तव्य । कुत्रापि लक्षणगमनाभा वात् । नचैतद्रूपवानेतत्वादित्यादौ तद्गमन शङ्क्यम् । तत्रापि विशिष्टाभावोभ याभावमादायाव्याप्ति सत्त्वात् । नच विवक्षितया घटसाध्यके नित्यज्ञानत्वहेतौ लक्षणसमन्वय सम्भवतीति वाच्यम् । तत्रापि नित्यज्ञानान्यत्वविशिष्टघटाभाव मादायाव्याप्तेः । नच नित्यज्ञानान्यत्वविशिष्टघटोऽपि नित्यज्ञाने वर्तते घटांशे

१ पृथिवीत्वद्रव्यत्वोभयाभाववान् इति ना पा   २ स का पा

वाकयद्वयाद्यभावस्य धूमादिमत्यपि वृत्तेरसम्भवस्य, कालिकसम्बन्धेन द्रव्यत्वाभावादौ साध्ये कालत्वादिहेतौ साध्यवद्भिन्नपरमाणुगगनादिवृत्तिदैशिकविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकसाध्याभावास्य द्रव्यत्वादेर्हेत्वधिकरणवृत्तित्वेन, अव्याप्तेर्वा प्रसङ्गात् ।

अत्र च साध्याभाववत्ताया सम्बन्धविशेषावच्छिन्नत्वानिवेशे, वह्नि-

कृष्णभट्टीय ।

या मैदमतेऽप्याह—कालिकेति । ननु समवायावच्छिन्नप्रतियोगिताके

न्यायरत्न ।

निरुक्तज्ञानान्यतरवैशिष्ट्यप्रकारकत्वस्यैव तत्र प्रयोजकत्वादिति वाच्यम् । तथापि घटपदजन्यबोधविषयताविशिष्टघटाभावस्य हेत्वधिकरणेऽसम्भवात्, नहि तादृशोऽपि घटस्तत्र वर्तते इति शक्यं वदितुं, तथा सति घटस्य घटपदवाच्यताप्रसङ्गात् । नचेच्छायास्तादृशघटत्वस्य एवेयमापत्तिर्न ज्ञानस्येति वाच्यम् । ज्ञानेच्छयोः समानविषयकत्वनियमाज्ज्ञानस्य तद्वत्वे इच्छायास्तद्वत्वनियमात् । ज्ञानत्वेन कृतित्वेन वा ज्ञानकृत्योः शक्तित्वस्येच्छात्वादिनियमनाविरहेण वक्तव्यत्वादिति चेन्न । सङ्केतस्य लोके पदार्थोपस्थितिप्रयोजकतया इच्छात्वेन तादृशजातीयेच्छैव शक्तित्वात् नतु ज्ञानमिति ज्ञानस्य तादृशघटवत्येऽपि बाधकाभावादित्यभिप्रायात् । वैशिष्ट्यव्याप्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताविशेषणत्वे एकव्यक्तिसाध्यके लक्षणसमन्वयानापत्तेः इति केचित् । अथ साध्यतावच्छेदकावच्छिन्नाभावनिवेशेऽपि महानसीयवह्न्यभाववारणमशक्यं । तस्य साध्यतावच्छेदकवह्नित्वावच्छिन्नप्रतियोगिताकत्वात् । नच साध्यतावच्छेदकपर्याप्तावच्छेदकताकत्वनिवेशात्तादृशाभाववारणसम्भव इति वाच्यम् । तथापि महानसीयत्वविशिष्टवह्निमतोऽभावमादाय दोषवारणात् । नच तादृशाभावो गुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्ध इति वाच्यम् । एतत्पक्षे गुरुधर्मस्य प्रतियोगितावच्छेदकत्वावश्यकत्वात् । अन्यथा साध्यवद्भिन्नवृत्तिसाध्याभाववद्वृत्तित्वस्य साध्यवद्भिन्नवृत्तित्वापेक्षया गुरुतया तदवच्छिन्नाभावरूपलक्षणवाक्यार्थाप्रसिद्ध्यापत्तेरिति चेत् । अत्र वदन्ति । उपलक्षितधर्मावच्छिन्नाभावविशिष्टधर्मावच्छिन्नाभावयोर्वैलक्षण्याय विशिष्टधर्मावच्छिन्नाभावीयप्रतियोगितावच्छेदकता, विशिष्टप्रतियोगिकसम्बन्धावच्छिन्ना विशेषणविशेष्योभयपर्याप्ता वा उपलक्षितधर्मावच्छिन्नप्रतियोगितावच्छेदकता केवलसम्बन्धावच्छिन्ना विशेष्यमात्रपर्याप्ता चेत्यवश्यमुपगन्तव्यम् । तथा च प्रकृते महानसीयत्वोपलक्षितधर्मावच्छिन्नाभावस्य हेतुमत्त्वसत्त्वेन तद्विशिष्टावच्छिन्नाभावस्य हेतुमति सत्त्वेऽपि तस्य विलक्षणीयसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकपर्याप्तावच्छेदकताकत्वविरहेणानुपादेयत्वसम्भवादिति दिक् ॥

कालिकसंबन्धेन द्रव्यत्वाभावेति । अत्र द्रव्यत्वपदं तदधिकरणत्वपरं

कृष्णंभट्टीयं ।

(कालिकसंबन्धावच्छिन्नप्रतियोगिताके वा) द्रव्यत्वाभावे साध्ये कथमव्याप्तिः । साध्यतावच्छेदकसंबन्धेन साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन साध्याभाववत्त्वस्याग्रे वाच्यतया साध्यतावच्छेदकीभूतकालिकसंबन्धेन साध्यवत्ताबुद्धिमति तत्संबन्धावच्छिन्नसाध्याभावस्य स्वरूपसंबन्धेन वत्ताज्ञानस्यैव विरोधितया द्रव्यत्वस्य तेन संबन्धेन साध्यवत्ताया असंभावितया साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावस्यैव लक्षणघटकत्वात् । द्वितीयलक्षणे च सुतरां तत्र साध्यतावच्छेदकसंबन्धेन साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन साध्यवद्भिन्नवृत्तित्वस्य निवेशनीयत्वात् । न च प्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेन तदुभयनिवेशादव्याप्तिः संगमनीया । तथासति कपिसंयोगाभावस्य च कालिकसंबन्धावच्छिन्नाभावत्वस्यापि प्रतियोगितया प्रतियोगिमत्ताग्रहविरोधितानियामककालिकसंबन्धमादाय व्याप्यवृत्तिसाध्यकाव्याप्तेः । प्रतियोगितावच्छेदकसंबन्धेन साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन तदुभयनिवेशपक्षे तत्संगतिरिति न । तथासति स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यवत्त्वघटितसाध्यवद्भिन्नवृत्तित्वस्य धूमवान्धूमकालीनवह्नेरित्यादौ संबन्धसामान्येन साध्यवद्भिन्ने हेतुशून्ये धूमकालीने साध्याभावसत्त्वादतिव्याप्तिवारणायावश्यनिवेशनीयतया साध्यवद्भिन्नो च साध्याभाववानिति कर्मधारयापेक्षया निर्वीजत्वापातात् प्रतियोगितावच्छेदकीभूतसमवायेन वह्निमद्भिन्नवृत्तिः समवायसंबन्धावच्छिन्नवह्न्यभावस्य वारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावसंबन्धसंबन्धादिति चेन्न । द्रव्यत्वाभावशब्देन द्रव्यत्वप्रकारकप्रमाविशेष्यताभावस्य विवक्षितत्वात् । एवं च साध्यवद्भिन्नवृत्तित्वघटकसाध्यवत्त्वमपि साध्यतावच्छेदकसंबन्धेन निवेश्यमिति न कर्मधारयापेक्षा निर्वीजेति । ननु कपिसंयोगी एतत्त्वादित्यादौ द्रव्यवृत्तिकपिसंयोगाभावस्य साध्यवद्भिन्ने कालिकसंबन्धेन वृत्तित्वादव्याप्तिः । दैशिकविशेषणतया तद्वृत्तित्वनिवेशे च घटत्वाभावादौ कालिकसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावादौ च साध्ये अव्याप्त्यादव्याप्तिः । प्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेन तन्निवेशे च कपिसंयोगादिसाध्यके कालिकसंबन्धेन कालिकसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यवृत्तिकपिसंयोगाभावाभावस्य प्रतियोगिमत्ताग्रहविरोधितानियामकत्वादव्याप्तिरिति चेन्न । साध्यतावच्छेदकसंबन्धेन साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन तन्निवेशात् । ननु साध्यवद्भिन्नवृत्तित्वनिवेशकत्वे साध्याभाववद्वृत्तित्वापेक्षया अभावत्वविलक्षणानुयोगितात्वाद्याधिक्येऽपि गुरु तदपेक्ष्य साध्यवद्भिन्नवृत्तित्वस्य प्रतियोग्यनधिकरणवृत्तित्वरूपस्यान्तर्भावनमेवोचितं । वस्तुतस्तु प्रतियोग्यनधिकरणं यत्साध्याभावाधिकरणं तद्वृत्तित्वनिवेशनमिति चेन्मैवम् । त्रिदशनये कल्प एव महाचार्यैः समाधास्यमानत्वात् । साध्याभावाधिकरणभेदेन विशेषणपक्षे तद्विशेष्यपक्षे आचार्यैर्वा सत्या-

मान् धूमादित्यादौ ह्रदादिवृत्तिवह्न्याद्यभावस्य कालिकसंबन्धेन पर्वतादौ वृत्तेरव्याप्तिः। दैशिकविशेषणताविशेषावच्छिन्नत्वनिवेशे कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावादौ दैशिकविशेषणतया साध्ये आत्मत्वादिहेतौ साध्यवद्भिन्नकालादिवृत्तेराकाशाभावात्मकसाध्याभावस्य आत्मादिषु वृत्तेः । घटत्वाभावादिसाध्यकसद्धेतौ घटत्वादेर्दैशिकविशेषणतासंबन्धेनाधिकरणतायां मानाभावेन चाव्याप्तिः । अतः साध्यतावच्छेदकसंबन्धेन साध्यवत्ताज्ञानं प्रति यादृशसंबन्धेन स्वप्रकारकनिश्चयः प्रतिबन्धकः, तेन संबन्धेन अभावत्वं निवेश्यं । संयोगेन वह्न्यादौ साध्ये यादृशसंबन्धो दैशिकविशेषणता । कालिकसंबन्धेन आकाशाभावाभावे दैशिकविशेषणतया साध्ये कालिकसंबन्ध एव तथा, समवायादिना घटत्वादेरभावे

कृष्णभट्टीयं ।

भावत्वविशिष्टानधिकरणत्वे चाह—घटत्वाभावेति । साध्यतेत्यादि । साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतस्वनिष्ठप्रकारतावच्छेदकसंबन्धेनेत्यर्थः । कालिकसंबन्धावच्छिन्नघटत्वाभावसमवायसंबन्धावच्छिन्नघटत्वाभावान्यतरत्वाभ्यत्वादित्यादौ विशेषणतया कालिकसंबन्धावच्छिन्नघटत्वाभावग्रहं प्रति कालिकसंबन्धेन घटत्वग्रहस्य प्रतिबन्धकतया तेन संबन्धेन घटत्वरूपसाध्याभाववति घटत्वादिरूपहेतुसत्त्वादव्याप्तिः । नच घटत्वस्य न स्वपदेन धर्तुं शक्यते । साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नाभावत्वाभावादिति वाच्यम् । तथापि कालिकसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभाववत्त्वप्रत्यक्षे समवायेनात्मत्वग्रहस्य समवायावच्छिन्नात्मत्वाभावत्वेन साध्यग्रहप्रतिबन्धकतयाऽव्याप्तिरित्यतः साध्यतावच्छेदकधर्मानिवेशः । साध्यतावच्छेद्यापत्वं ।

तेन कालिकसंबन्धेन द्रव्यत्वाभाववत्तादशौ समवायसंबन्धेनैव तदभाववत्ताज्ञानस्य विरोधितया तेन संबन्धेन द्रव्यत्ववतोऽप्रसिद्धत्वेऽपि न क्षतिः । अथवा भावाभावसाधारणदैशिकविशेषणत्वाभिप्रायकमिदम् । नचैवं साध्यवत्ताग्रहविरोधिताश्रियामकसंबन्धेन साध्याभाववत्त्वनिवेशो व्यर्थ इति वाच्यम् । मतद्वयसाधारण्यानुरोधेन तन्निवेशात् । साध्यतावच्छेदकसंबन्धेन साध्यवत्ताज्ञानं प्रतीत्यादि । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकध-

१ स्थले का. पा. २ वृत्तित्वं का. पा. वृत्तितया त. पा. ३ विशेषणेति का. अधिक.

दैशिकविशेषणतया साध्ये समवायादिरेवेति न दोषः । नचैवं वृक्ष-निष्ठा या कपिसंयोगाभावीयमूलावच्छिन्नविशेषणता तादृशसंबन्धेन वृक्षादौ तादृशाभाववत्त्वाज्ञानेऽपि कपिसंयोगवत्त्वाज्ञानोत्पत्तेः तादृश-संबन्धो न लक्षणघटक इति साध्यवद्भिन्नवृत्तित्वविशेषणं व्यर्थमिति वाच्यम् । संयोगतदभावयोरविरुद्धत्वज्ञानाभावदशायां वृक्षः कपि-संयोगाभाववानिति ज्ञानस्यापि वृक्षे कपिसंयोगवत्ताज्ञानविरोधितया वृक्षनिष्ठतदभावीयविशेषणताया अपि साध्यवत्ताज्ञानप्रतिबन्धकता-वच्छेदकीभूतसंसर्गताश्रयत्वात् ॥

कृष्णंभट्टीयं ।

दकसंबन्धावच्छिन्नेत्यनुक्त्वा यत्किंचित्संबन्धेन साध्यवत्ताग्रहं प्रतीत्युक्तौ कालिकसंबन्धावच्छिन्नद्रव्यत्वाभावे कालिकसंबन्धेन साध्येऽव्याप्तिः । स्व-रूपसंबन्धेन साध्यवत्ताग्रहंप्रति स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकसाध्या-भावस्य द्रव्यत्वरूपतया कालिकसंबन्धेन तद्वत्ताज्ञानस्यापि प्रतिबन्धकतया कालिकसंबन्धस्यापि तथात्वापत्तेः कालस्यापि(स्वव) तत्संबन्धेन साध्या-भावाधिकरणत्वादित्यत' साध्यतावच्छेदकसंबन्धेनेत्युक्तम् । नच संयोगी द्रव्यत्वादित्यादौ द्रव्यवृत्तिसंयोगाभावस्यैव कालिकसंबन्धेन साध्यवद्भि-न्नगुणादिवृत्तितयाऽव्याप्तिरत साध्यवद्भिन्नवृत्तित्वमपि साध्यतावच्छेदकसं-बन्धेन साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन वाच्यम् । एवं[च] साध्यवत्ताग्रहविरोधितानियामकीभूतयादृशसंबन्धेनाभावस्य साध्यवद्भिन्न-वृत्तित्व (तथाविध) तादृशसंबन्धेन साध्याभाववत्त्वमिति संबन्धैक्यविवक्ष-णादुक्तस्थले साध्याभाववदधिकरणतावच्छेदकीभूतकालिकसंबन्धस्य साध्य-

न्यायरत्नं ।

र्मावच्छिन्नप्रकारताशालिनाहार्यज्ञानसामान्यं प्रति, यादृशसंबन्धेन साध्यता-वच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वाव-च्छिन्नवत्तावगाहनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयसामान्य प्रतिबन्धकं, तादृशसंबन्धेनेत्यर्थः । तेन पर्वतः संयोगेन वह्निमान्कालिकसंबन्धावच्छिन्नवह्न्य-भावत्वावच्छिन्नप्रतियोगिताकाभाववानिति समूहालम्बनात्मकसाध्यवत्ताज्ञानविशेषं प्रति, कालिकसंबन्धेन वह्न्यभाववत्ताज्ञानस्य कालिकसंबन्धेन प्रतिबन्धकत्वेऽपि, वह्निमान्धूमादित्यादौ नाव्याप्तिः । एवंच साध्यतावच्छेदकसंबन्धनिवेशस्यापि सार्थक्यं । अन्यथा स्वरूपसंबन्धेन संयोगसंबन्धावच्छिन्नवह्न्यभाववत्ताज्ञानस्य साध्यवत्ताज्ञानसामान्यान्तर्गतं यत्समवायेन साध्यवत्ताज्ञानं तं प्रत्यप्रतिबन्धक-

---

१ अभाव ह. पु. अधिकम्.

न्यायरत्नं।

तया दैशिकविशेषणताया अपि समग्रहानुपपत्तेः । नन्वेवमपि नानाधर्मितावच्छेदककसाध्यवत्ताज्ञानसाधारणैकप्रतिबध्यताया अभावेन दैशिकविशेषणताया असमग्रहत्वदवस्थ एवेति वाच्यम् । सर्वं वह्न्यभाववदिति निश्चयाय प्रतिबध्यताया एव तथाविधाया प्रसिद्धेः । प्रकृतलक्षणे सर्वत्वावच्छिन्नविशेष्यकत्वेनैव निश्चयस्य विशेषणीयत्वात् । यद्वा स्वसमानधर्मितावच्छेद(क)त्वेन साध्यवत्ताज्ञान विशेषणीय स प्रतिबन्धकनिश्चय इति दिक् ॥

यत्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिवेशेनैवोक्तसमूहालम्बनमादाय दोषवारणसम्भवात्साध्यवत्ताज्ञानसामान्यनिवेशो गौरवमस्त । प्रकारतया साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे पर्वतो वह्न्यभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववानिति ज्ञाननिष्ठाया कालिकसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारताशालिनिश्चयनिरूपितप्रतिबध्यताया प्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नतया कालिकसम्बन्धस्यापि समग्रहापत्त्या वह्निमान्धूमादित्यादावव्याप्त्यापत्तिरतस्तदुपात्तम् । साध्यतावच्छेदकधर्मावच्छिन्नत्वस्य प्रकारतायामनिवेशे वह्निमत्त्वप्रकारकप्रमाविषयो धूमादित्यादौ, साध्याभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वेन साध्यवत्ताज्ञानं प्रति, कालिकसम्बन्धेन साध्याभाववत्ताज्ञानस्य प्रतिबन्धकतया कालिकसम्बन्धसमग्रहापत्तिरतस्तन्निवेश । नन्वेवमपि संयोगेन वह्निमान्पर्वतो वह्न्यभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववान्विलक्षणकज्ञानं प्रति, संयोगेन वह्निविशिष्ट पर्वते कालिकसम्बन्धेन वह्न्यभाववत्ताज्ञानस्य प्रतिबन्धकतया, कालिकसम्बन्धसमग्रहो दुर्वार एव तादृशज्ञाननिष्ठप्रतिबध्यताया धर्मितावच्छेदकविषयितावधया संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारिताया अनवच्छेदकत्वादिति वाच्यम् । सकलावच्छिन्नविशेष्यकवह्न्यभावप्रकारताशालिज्ञाननिरूपितप्रतिबध्यतावच्छेदककोटौ धर्मितावच्छेदकविषयिताया अनिवेशेनोक्तदोषाभावात्, निवेशेऽपि वा न वह्नित्वावच्छिन्नप्रकारत्वत्वेन, किन्तु [वह्नित्वाव]च्छिन्नधर्मितावच्छेदकतात्वेनैव विनिवेशवत्ता वा विशिष्येव फलेच्छानामुत्तेजकत्वपदे साध्यधर्मितावच्छेदकभेदेन प्रतिबध्यप्रतिबन्धकभावाभेदस्यावश्यकत्वात् । तथापि न क्षति धर्मितावच्छेदकतानात्मकत्वेन प्रकारताया विशेषणीयत्वादिति । तत्सत् । एवं सति वह्न्यनिष्ठासम्बन्धसाभावप्रतियोगिता[वच्छेदकत्वे प्रतियोगिता]सम्बन्धेन वह्न साध्यताया वह्निध्वंसत्वहेतावव्याप्तेर्दुर्वारत्वापत्तेस्तत्र साध्याभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वाच्छन्नसाध्यवत्ताबुद्धिं प्रति, कालिकसम्बन्धेन साध्याभाववत्ताज्ञानस्य प्रतिबन्धकतया, कालिकसम्बन्धसमग्रहस्य दुर्वारत्वात्तादृशज्ञानीयप्रतिबध्यतायां प्रतियोगितासम्बन्धावच्छिन्न[वह्नित्वावच्छिन्न]प्रकारताया अवच्छेदकत्वात् । यदि च साध्यतावच्छेदकसम्बन्धता,

कृष्णभट्टीय ।

वच्छेदकनिश्चयवृत्तित्वप्रकारतामात्रानतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं निवेश्यम्। निश्चयत्वमनुपादाय वा स्वप्रकारताया ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताया स्वरूपसम्बन्धरूपमवच्छेदकत्वं निवेशनीयम्। प्रतिबन्धकताविशेषलाभार्थं च निश्चयत्वोत्कीर्तनमिति। वस्तुतस्तु स्वनिरूपितप्रतिबन्धकताव्याप्यसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवत्तानिश्चयत्वाश्रयग्रहप्रतिबन्धकत्वं निश्चयपदोपसंदानलभ्यम्। एवञ्च साध्यतावच्छेदकसम्बन्धानुपादानमगतिः। समानाधिकरण्यानुपलक्षणमेतत्। इति अतिव्याप्तिमाशङ्क्याद्यादीधितेरव्याप्तिसंयोजककालीनकथनकृतानर्थक्यमव्याप्तेरित्यनुसन्धायाऽव्याप्तिमाशङ्क्योक्तम्। तत्र साध्यतावच्छेदकसम्बन्धेन संयोगवत्ताज्ञानं प्रति निरवच्छिन्नविशेषणतासम्बन्धेन संयोगाभाववत्ताज्ञानं प्रतिबन्धकमिति मते नाव्याप्तिः। गुणादेरपि तेन सम्बन्धेन साध्याभाववत्त्वात्। अपितु अव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वमते स्वरूपसम्बन्धेन संयोगाभावज्ञानस्य प्रतिबन्धकतया तन्मते एवाव्याप्तिरित्याशङ्काबीजभूतं वोद्धव्यं क्रमेण शङ्कासमाधाने च दर्शयति—नचेति। तथाच निरवच्छिन्नविशेषणतैव तादृशीयाभिप्राय ॥

अत्र निरवच्छिन्नविशेषणतासम्बन्धावच्छिन्नाभावस्यैव साध्याभावकल्पपक्षे नाव्याप्तिः। किंतु शुद्धविशेषणतासम्बन्धावच्छिन्नाभावस्य तथात्वपक्षे इत्या-

न्यायरत्न ।

यादृशरूपावच्छिन्ने पर्याप्ता, तादृशरूपविशिष्टसाध्यतावच्छेदकसम्बन्धपर्याप्तावच्छेदकताकत्वं प्रकारताया साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं दर्शितप्रतिबन्धतावच्छेदककोटिप्रविष्टप्रकारता च न साध्यतावच्छेदकशुद्धप्रतियोगितात्वविशिष्टप्रतियोगित्वसम्बन्धानवच्छिन्ना। अपितु प्रतियोगित्वसम्बन्धावच्छिन्नत्वविशिष्टप्रतियोगित्वावच्छिन्नेति नोक्तदोषः। एतेन निरवच्छिन्नविशेषणतया एव कपिसंयोगवत्त्वधीविरोधिज्ञानविषयतया लक्षणे साध्यवद्भिन्नवृत्तित्वविशेषणं व्यर्थमिति। न चैतन्मिमतद्वारा अनुत्थितिर्मूलावच्छिन्नत्वविशिष्टसमवायसम्बन्धेन कपिसंयोगवत्ताज्ञानं प्रति मूलावच्छिन्नविशेषणतासम्बन्धेन कपिसंयोगाभाववत्ताज्ञानस्य प्रतिबन्धकतया तादृशसम्बन्धेन कपिसंयोगाभाववत्त्वाया वृक्षेऽसत्त्वात् द्विशेषणवैयर्थ्यानवकाशादिति परास्तमिति विभाव्यते। तदपि विपरीतज्ञानानुसारत्वस्य प्रतिबध्यतावच्छेदकत्वपक्षे प्रतिबध्यतावच्छेदककोटौ प्रकारकत्वनिवेशे प्रयोजनविरहेण दर्शितप्रकारकत्वावच्छिन्नत्वस्य प्रतिबध्यताया निवेशासम्भवात्। कालिकविशेषणतया वह्न्यभाववान्-दैशिकविशेषणतया वह्न्यभाववानिति ज्ञानविशिष्टस्य पर्वतः कालिकसम्बन्धेन वह्न्यभाववानिति ज्ञानस्य वह्निमत्ताज्ञानं प्रति, अवच्छेदकधर्मदर्शनविधया प्रतिबन्धकत्वात्तादृशस्थलेऽसम्भवदोषो वह्निसाध्यकस्थले दुर्वार इति प्रतिबन्धकदिशि नियमसामान्योपादानम्। एवञ्च सप्रकारकत्वनिश्चयत्वादीनामपि सार्थक्यमित्यलं बहुना ॥

**केचित्तु** साध्यात्मक[1]ाभावनिरूपितप्रतियोगितावच्छेदकसंबन्धेन साध्याभाववत्त्वं विवक्षितम्। स च संबन्धो यत्संबन्धावच्छिन्नप्रतियोगिताकः स्वाभावः साध्यात्मकः स इति नोक्तानुपपत्तिः। अथ[2] समवायेन प्रमेयत्वावच्छिन्नसाध्यकद्रव्यत्वप्रकारकप्रमाविशेष्यत्वादि[3]हेतुकस्थले कालिकसंबन्धस्यापि तत्संबन्धावच्छिन्नप्रतियोगिताकघटाभावरूपप्रमेयनिरूपितप्रतियोगितावच्छेदकत्वात्तेन संबन्धेन साध्याभाववति काले हेतोर्वृत्तेरव्याप्तिः। नच साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबन्धनिवेशान्नायं दोषः। कालिकसंबन्धावच्छिन्न(प्रतियोगिताक)घटाभावादिरूपप्रमेयस्य कालिकसंबन्धावच्छिन्नप्रतियोगितायाः घटादावेव सत्त्वात्कालिकसंबन्धस्य न समवायसंबन्धावच्छिन्नप्रमेयाभावात्मकस्वनिष्ठप्रतियोगितावच्छेदकसंबन्धत्वविरहादिति वाच्यम्। तादृशप्रमेयाभावस्य कालिकसंबन्धावच्छिन्नप्रतियोगिताको योऽभावः तस्यापि प्रमेयत्वेन साध्यतया तन्निरूपिततादृशप्रमेयाभावरूपस्वनिष्ठप्रतियोगितावच्छेदकत्वस्य कालिकसंबन्धेऽप्यक्षततया व्याप्तेर्दुर्वारत्वात्। नच यावत्साध्यनिरूपितप्रतियोगिता निवेशनीया। तथा चोपदर्शिताभावात्मकयत्किंचित्प्रमेयनिरूपितस्वनिष्ठप्रतियोगितावच्छेदककालिकसंबन्धमादाय न दोष इति वाच्यम्। असमवेतप्रमेयस्य न समवायसंबन्धावच्छिन्नप्रमेयाभावोऽत्र नास्तीति प्रत्ययाविषयतया तादृशप्रमेयाभावाभावत्वे मानाभावात्। तादृशप्र-

कृष्णंभट्टीयं।

प्रमेयत्वहेतुकमिति मतं दर्शयति—केचित्त्विति। साध्यात्मकाभावनिरूपितेति। साध्यनिरूपितेत्यर्थः। अभावपदमसंभावनावारणाय।

माथुरम्।

केचित्त्विति। साध्यात्मकस्वाभावनिरूपितेत्यस्य साध्यनिरूपितेत्येवार्थः। साध्ये स्वाभावत्वकथनमसंभावनावारणायेति भ्रमेण शङ्कते—नचेति। भ्रमं निराकरोति—तत्रेत्यादिना। लाघवमनुपेक्ष्य पूर्वकल्पे वक्ष्यमाणदोषं चाविस्याह—साध्यतावच्छेदकसंबन्धेन वृत्तिमत्साध्यनिरूपितेति।

१ स्वेति का. पा. अधिक त. पाठेऽपि. २ नचैवमिति म. पु. पाठः. ३ विषयत्व का. पा. त. पा.

कृष्णंभट्टीयं ।

नोक्तानुपपत्तिः । घटत्वाभावादिसाध्यकाव्याप्तिः हेतुतावच्छेदकसंबन्धाव-
च्छिन्नवृत्तित्वाप्रसिद्धिभयेन द्रव्यत्वोपेक्षा । **सद्धेतुत्वार्थं प्रमेति । घटा-
भावरूपेति ।** समवायसंबन्धावच्छिन्नप्रमेयाभावस्य यो विशेषणतासंब-
न्धावच्छिन्नाभावस्तस्य प्रमेयमात्रस्वरूपत्वेन कालिकसंबन्धावच्छिन्नघटाभा-
वादिरूपत्वमित्याशयेनेदम् । **यावत्साध्यनिरूपितेति ।** साध्यतावच्छेद-
कव्यापकानुयोगितानिरूपितेत्यर्थः । तेन नैकव्यक्तिसाध्यके यावत्त्वाप्र-
सिद्धिः । **सर्वेति ।** एकैकसमवेतरूपत्वे । सकलसमवेतरूपत्वे तु महागौर-
वम् । यत्किंचिदिति यावत्पदनिवेशस्फोरकम् । वह्निमान्धूमादित्यादौ स्वनिष्ठ-
प्रतियोगितावच्छेदककालिकसंबन्धवारणाय साध्यनिरूपितत्वनिवेशः । का-
लिकसंबन्धावच्छिन्नप्रमेयाभावस्य दैशिकविशेषणतासंबन्धेनाभावोऽपि प्रमे-
यत्वेन साध्य इति, तादृशेन दैशिकविशेषणतासंबन्धेन साध्यवन्निष्ठवृत्तेः
साध्याभावस्य तादृशेन कालिकसंबन्धेनाधिकरणमादायाव्याप्तेरित्यतो यत्र-
पम् । ननु तथापि महाकालानुयोगिकविशेषणतासंबन्धेन प्रमेयस्य साध्यत्वे
महाकालत्वादावव्याप्तिः । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रमेयाभावस्य
यः शुद्धकालिकसंबन्धावच्छिन्नाभावस्तस्य प्रमेयत्वेन साध्यतया महाकाला-
नुयोगिककालिकसंबन्धेन वृत्तितया च तत्प्रतियोगितावच्छेदकीभूतकालि-
कसंबन्धेन साध्यवन्निष्ठवृत्तेः साध्याभावस्य महाकाले तत्संबन्धेन सत्त्वात् ।
एवं महाकालानुयोगिककालिकसंबन्धेन द्रव्यवृत्तित्वविशिष्टाभावस्य साध्य-
त्वाप्युक्तहेतावव्याप्तिः निरुक्तसाध्यस्य न शुद्धकालिकसंबन्धावच्छिन्नाभावः
तस्यापि द्रव्यवृत्तित्वेन साध्यतया महाकालानुयोगिककालिकसंबन्धेन वृत्ति-
तया च तन्निरूपितप्रतियोगितावच्छेदकीभूतशुद्धकालिकसंबन्धस्य साध्यव-
न्निष्ठखण्डकालनिरूपितवृत्तितावच्छेदकत्वात् । न चैतन्मते विशेषरूपेण न
संबन्धत्वम् । अन्यथाग्रे स्वपदार्थस्य द्विधानिवेशानुपपत्तिः, वह्निरूपसाध्य-
निरूपितप्रतियोगितावच्छेदकविशेषणताविशेषेणाकाशाभावादेः पर्वतादाव-
वृत्त्या वह्निमान्धूमादित्यादावव्याप्त्यभावेन साध्याभाववैयर्थ्यस्य ध्रुवत्वा-
दिति वाच्यम् । तथापि स्वरूपसंबन्धेन द्रव्यवृत्तित्वविशिष्टाभावे साध्ये
द्रव्यत्वादावव्याप्तेः । साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नाभावस्य यः कालि-
कसंबन्धावच्छिन्नाभावस्तस्यापि नित्यद्रव्यवृत्तित्वेन द्रव्यवृत्तित्वविशिष्टाभा-
वाद्यात्मकतया साध्यरूपत्वेन तत्प्रतियोगितावच्छेदकीभूतकालिकसंबन्धेन
साध्यवन्निष्ठस्पन्दादिवृत्तिसाध्याभाववति अन्यद्रव्ये हेतोः सत्त्वात् । एवं
विषयितासंबन्धेन प्रमेयस्य साध्यत्वे ज्ञानत्वादावव्याप्तिः । विषयितासंब-
न्धावच्छिन्नप्रमेयाभावस्य यः कालिकसंबन्धावच्छिन्नाभावस्तस्य प्रमेयत्वेन
साध्यतया तत्प्रतियोगितावच्छेदककालिकसंबन्धेन साध्यवन्निष्ठवृत्तित्वस्य

१ स्वनिरूपितत्वपदप्रयोजनम्. व. पु. नास्ति. २ विशेष मे. पु. अधिकम्.
गदा. प. ५

मेयाभावनिष्ठयावत्प्रमेयनिरूपितप्रतियोगित्वाप्रसिद्ध्या उक्तस्थलेऽव्याप्तितादवस्थ्यात् । नच साध्यतावच्छेदकसम्बन्धेन वृत्तिमद्यावत्साध्यनिरूपितप्रतियोगिताया निवेशनीयतया नोक्ताप्रसिद्धिरिति वाच्यम् । सर्वत्र समवायस्यैकतया सत्तयैव तादृशप्रमेयाभावाभाववत्ताप्रतीतिनिर्वाहे सर्वसमवायसम्बन्धकगुणादीनां तादृशप्रमेयाभावाभावत्वे मानाभावेन दर्शिताप्रसिद्धेर्दुर्वारत्वादिति चेन्न । साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्किञ्चित्साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धनिवेशेनोपपत्तेः । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य दर्शितसाध्याभावाभावस्य साध्यत्वेऽपि तस्य साध्यतावच्छेदकसमवायसम्बन्धेनावृत्तित्वात् । नचैवमपि कालिकसम्बन्धेन प्रमेयसाध्यककालत्वादिहेतावव्याप्तिः । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य यः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः तस्य स्वाभावात्मकस्य प्रमेयत्वेन साध्यस्य प्रतियोगितावच्छेदकीभूतकालिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नप्रमेयाभावाधिकरणे हेतोर्वृत्तेरिति वाच्यम् । तादृशप्रतियोगितावच्छेदकसम्बन्धेन साध्यवन्निष्ठवृत्तित्वाभावस्य तत्सम्बन्धेन वक्तव्यस्य विवक्षणीयत्वात् ।

कृष्णम्भट्टीय ।

साध्याभाव वक्तव्यस्य च अव्याप्ते सत्वात् । साध्यतावच्छेदकव्यापकानुयोगितानिरूपितप्रतियोगिता निवेश्य वक्तव्यमभवपि महत्वासम्भव सम वायेन प्रमेयवाभावसाध्यक साध्याभावाभावस्य लाघवेन सत्तारूपत्वमुप गम्य तथाविधानुयोगिताप्रसिद्ध्यावदवस्थात् । अत साध्यनिरूपितस्व साध्यवत्निष्ठवृत्तित्वानुयोगिताकत्वम् । अत साध्यतावच्छेदकसम्बन्धेन साध्य तावच्छेदकावच्छिन्नव्यापकतावच्छेदकीभूतानुयोगितानिरूपितत्वम् । अत [illegible] न दोष । तथात्र वक्तव्यवृत्तित्वसाध्यव्यापकतावच्छेदक [illegible] ताप्रसिद्ध्याव्याप्तिः । एव विध विनाशसम्बन्धेन प्रमेयसाध्यकध्वंसादिनिरासमुखम् । अतएव गदाधरेण प्रमेयस्य समवायेन साध्ये न साध्याभावाभावस्य सत्तारूपत्वेऽपि सत्तापि

व्याप्तत्व ।

तादृशप्रतियोगितावच्छेदकसम्बन्धेन साध्यवन्निष्ठवृत्तित्वस्य अभावमिति । तथात्र साध्यनिरूपितवृत्तित्व तत्सम्बन्धेन एव तत् साध्यवन्निष्ठवृत्तित्वाभाव सम्बन्धेन तत्र, तत्र सम्बन्धेन, तदधिकरण, वृत्तित्व

कृष्णंभट्टीयं ।

प्रानुयोगितया एव साध्यव्यापकतावच्छेदकतया तन्निरूपितप्रतियोगितावच्छेदकीभूतः स्वरूपसंबन्ध एवेति नाव्याप्तिः । अन्यथा प्रतियोगितायाः साध्यनिरूपितत्वदौर्लभ्यप्रसङ्गादिति वाच्यम् । कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववानात्मत्वादित्यादौ स्वरूपसंबन्धावच्छिन्नप्रतियोगिताककालवृत्तित्वविशिष्टगगनाभावाभावस्य साध्यसमनियततया साध्यरूपत्वमेवेति कालवृत्तित्वविशिष्टगगनाभावनिष्ठायाः साध्यनिरूपितप्रतियोगितायाः विशेष्यसाधारण्येन [ विशिष्टस्य शुद्धानतिरिक्तत्वात् ] गगनाभावनिष्ठत्वमिति तदवच्छेदकस्वरूपसंबन्धेन गगनाभावरूपसाध्याभाववत्यात्मनि धूमेरव्याप्तिः । [ साध्यव्यापकतावच्छेदकानुयोगितानिरूपितप्रतियोगितावच्छेदकसंबन्धविशेषेऽपि भावात् ] । नचोक्तस्थले स्वरूपसंबन्धस्य लक्षणघटकत्वेऽपि अधिकरणभेदेन गगनाभावरूपसाध्याभावभेदोपगमात् साध्यवद्भिन्नवृत्तिसाध्याभाववत्त्वमात्मनि नास्त्येवेति कथमव्याप्तिर्यत इति वाच्यम् । गगनाभावभेदोपगमे स्वनिष्ठप्रतियोगितेऽन्य स्वनिष्ठत्वैकत्वापत्तेः । कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावसाध्यकात्मत्वहेतौ आकाशाभावस्याधिकरणभेदेन भेदादेवाव्याप्त्यनवकाशात् । एवं घटभिन्नत्वादिसाध्यके कालिकसंबन्धावच्छिन्नप्रतियोगिताकस्य घटत्वविशिष्टगगनाभावाभावस्य साध्यसमनियततया तत्प्रतियोगितावच्छेदककालिकसंबन्धेन साध्याभाववति पटादौ हेतुसत्त्वेनाव्याप्तेः स्वनिष्ठत्वमात्रावश्यकतयाऽधेत्यादिग्रन्थानुरोधितः । किंवा स्वनिष्ठत्वोपादानेऽपि तादृशघटत्वविशिष्टगगनाभावस्य तथात्वेन कालिकसंबन्धसंग्रहप्रसङ्गेन तत्रैवाव्याप्तेर्दुर्वारत्वादिति चेन्न । साध्यवद्भिन्नमात्रवृत्तित्वस्य वाच्यत्वात् । नच तादृशप्रतियोगितावच्छेदकीभूतयत्संबन्धेन साध्यवद्भिन्नवृत्तित्वं तत्तत्संबन्धेन साध्याभाववत्त्वं वाच्यमिति सर्वदोषवारणमात्रपर्यं व्यर्थमिति वाच्यम् । विषयितासंबन्धेन प्रमेयसाध्यके गगनज्ञानान्यतरत्वादित्यादावतिव्याप्तेः । तत्र कालिकसंबन्धस्वरूपसंबन्धयोरपि संग्रहसंभवाच्चाभ्यां साध्याभावाधिकरणे ज्ञानभिन्नजन्ये हेतोरसत्त्वात् । अथ मात्रार्थान्तर्भावापेक्षया लाघवाद्येन संबन्धेन लक्षणसमन्वयो जायते स एव तत्पदेनोपादेयः । आत्मा, कालान्यतरत्वादित्यादौ कालिकसंबन्धेन साध्यवद्भिन्नवृत्तेरात्मत्वाभावस्य तत्संबन्धेनाधिकरणे हेतोरवृत्तेरतिव्याप्तिरतः प्रतियोगितावच्छेदकान्तमिति चेन्न । प्रमेयवान् गगनकालान्यतरत्वादित्यादौ उक्तिरत्वैव दैशिकविशेषणतां समवायेन प्रमेयाभावस्य यः कालिकसंबन्धावच्छिन्नाभावस्तस्यापि प्रमेयत्वेन साध्यतया तत्प्रतियोगितावच्छेदककालिकसंबन्धघटितव्याप्तिसंगात् । सत्तान्यप्रमेयसाध्यके तु पूर्ववदिति । [४]वस्तुतस्तु सत्तान्यप्रमेयाभावा-

१ इदन्च मै. पु. नास्ति. २ दुर्वारत्वेति मै. पा. ३ व्याप्तेः इति मै. पाठः.
४ वस्तुतस्तु इत्यादि अग्रन्थो इति पर्यन्तं न. पु. नास्ति.

### कृष्णंमट्टीयं ।

भावः द्रव्यत्वगुणत्वकर्मत्वान्यतमरूपः तस्य सत्तान्यत्वात् । अन्यथा समवेतप्रमेयस्वरूपत्वे मानाभावादिति ग्रन्थवैयर्थ्यात् । एवंच रूपाद्यप्रमेयाभावाभावादेः रूपान्यसमवेतादिरूपतामभिप्रेत्य समवेतरूपतामभिधाय शुद्धप्रमेयाभावाभावमात्रस्य सत्तारूपत्वाभिधानसङ्गतिः । सत्तान्यप्रमेयाभावाभावस्य सत्तारूपत्वे साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावाभावनिरूपितप्रतियोगितावच्छेदकत्वादिक्रमेण वा निवेशः । साध्याभावाभावश्च साध्यवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नप्रतियोगिताकः । तेन न पूर्वोक्तदोषः । साध्यवन्निष्ठवृत्तित्वं तु यथाश्रुतमेव ॥

परेतु साध्यतावच्छेदकसमानाधिकरणानियोगिता तादृशसाध्याभावत्वावच्छिन्नप्रतियोगिताकानुयोगितान्यतरनिरूपितप्रतियोगितेत्यादिक्रमेण निवेशः । प्रथमानुयोगितायां साध्यवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नप्रतियोगिताकत्वनिवेशाच्च पूर्वोक्तदोषः । घटत्वाभावसाध्यके घटत्वरूपसाध्याभावस्य कालिकसंबन्धावच्छिन्नाभावमादाय कालिकसंबन्धसत्त्वादाव्याप्तिरतः साध्याभावत्वावच्छिन्नप्रतियोगितायां दैशिकविशेषणतासंबन्धावच्छिन्नत्वं निवेश्य । तथाच तत्रैव घटत्वरूपसाध्याभावनिष्ठप्रतियोगितावच्छेदकस्वरूपसंबन्धेन वैशिष्ट्याप्रसिद्धिरतः समवायसंबन्धमादाय साध्योपादानं । कालिकसंबन्धावच्छिन्नाकाशाभावाभावसाध्यके आकाशाभावघटोभयत्वावच्छिन्नप्रतियोगितावच्छेदकस्वरूपसंबन्धमादायाव्याप्तिरतः साध्याभावावच्छिन्नत्वनिवेशः । अथवाकाशाभावनिष्ठसाध्याभावत्वावच्छिन्नस्य स्वरूपसंबन्धेन केवलान्वयित्वात् अन्यतरघटकतदभावाप्रसिद्धिः । गगनात्मकसाध्याभावोपगमेन स्वरूपसंबन्धग्रहस्य साध्याभावाभावे वृत्तिमत्त्वविशेषणेन वारणेऽपि तदप्रसिद्धिः । साध्याभावत्वावच्छिन्नप्रतियोगितायां संयोगत्वरूपान्यतरसंबन्धावच्छिन्नत्वदाने तादृशाकाशाभावस्य स्वरूपसंबन्धेन वृत्तेस्तत्प्रसिद्धिः । नच स्वरूपसंबन्धावच्छिन्नत्वसंयोगसंबन्धावच्छिन्नत्वान्यतरत्वं तद्विशेषणमिति संयोगसंबन्धावच्छिन्नाकाशाभावाभावस्य तद्घटकस्य प्रसिद्धिः । गगनाभावाभावानुपगमाच्च न स्वरूपसंबन्धमादाय दोष इति वाच्यम् । तथासति समवायाद्यवच्छिन्नघटाभावसाध्यके संयोगसंबन्धापत्त्याऽव्याप्तेः । मैवम् । संयोगाद्युभयतो समवायावच्छिन्नत्वस्वरूपसंबन्धा-

न्यायरत्न ।

साध्याभाववद्वृत्तित्वमादायैव तत्साध्यके गुणकर्मैवौ लक्षणसमन्वय इति दिक् ( शिवम् ) ॥

अथैवमपि कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावे साध्ये आत्मत्वादावव्याप्तिरस्त्येव । तादृशसाध्यस्य यो व्यधिकरणसंयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावो यथ तादृशसाध्यगगनोभयत्वावच्छिन्नगगनत्वयोगिता-

उक्तस्थले च साध्याभावस्य कालिकसम्बन्धेन साध्यवद्भिन्ने अवृत्तेः । अथैवं तादृशप्रतियोगितायां स्वनिष्ठत्वनिवेशो विफलः । तदनिवेशे

कृष्णभट्टीय ।

किंतु घटत्वमेवेति नाव्याप्तिः । यद्यपि द्वितीयकल्पे घटत्वस्य घटभेदप्रतियोगिताशून्यत्वान्नेदं निवेशयितुं शक्यते । न च तत्कल्पे साध्यसमव्यापकनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगिताश्रयत्वं साध्याभावे निवेश्यम् । तथा सति घटभिन्नकपालत्वादित्यादौ घटात्मकसाध्याभावस्य घटानुयोगिककालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटसामान्याभावस्य च साध्यसमनियततयेन तन्निष्ठात्यन्ताभावत्वनिरूपितप्रतियोगिताश्रयतया साध्यीयप्रतियोगितावच्छेदकतावच्छेदकसमवायेन तद्वत्तायाः कपाले सत्त्वादव्याप्तेः । तथापि साध्याभावे साध्याभावत्वावच्छिन्नप्रतियोगिताकाभावनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगिताश्रयत्वस्यानाप्त दोषः । न च स्ववृत्तिप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावत्वं विवक्षितमिति न दोष इति वाच्यम् । तथा सत्यत्यन्ताभावत्वनिरूपितप्रतियोगित्वनिवेशव्यावृत्त्यसङ्गतेः । प्रागुक्तात्मत्वप्रकारकप्रमाविशेष्यत्वाभावादिसाध्यके स्वनिष्ठत्वघटकसम्बन्धव्यावृत्त्यसङ्गतेश्च । अथ साध्याभावे तादात्म्यसम्बन्धावच्छिन्नसाध्यीयप्रतियोगिताश्रयत्वग्रहणान्न घटभिन्नकपालत्वादित्यादावव्याप्तिः । वह्निमान्धूमादित्यादौ वह्निमद्भेदस्य वह्निस्वरूपतया वह्निमद्भिन्न एव साध्यीयप्रतियोगिताश्रयत्वप्रसिद्धिरिति चेत्तर्हि वह्न्यभावस्य वह्निमद्भिन्नतया साध्यीयतादात्म्यप्रतियोगिताश्रयत्वेनाव्याप्तेः । न च तादात्म्यसम्बन्धानवच्छिन्नप्रतियोगिताश्रयत्वं साध्याभावे देयम् । अथ तदात्यन्ताभावत्वनिरूपितप्रतियोगिताश्रयत्वमिति न दोष इति वाच्यम् । तथा सति द्वितीयकल्पे घटत्वे घटभेदप्रतियोगित्वविरहेणाव्याप्तेः । यदि च तादात्म्यसम्बन्धानवच्छिन्नप्रतियोगित्वतादात्म्यसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वान्यतराश्रयत्वं तत्र दीयते । तथापि घटभिन्नं कपालत्वादित्यत्राव्याप्तिरेव । घटेऽपि घटभेदाभावत्वावच्छिन्नप्रतियोगितायाः अत्यन्ताभावत्वनिरूपितत्वात्तादात्म्यसम्बन्धानवच्छिन्नत्वाच्चेति चेत् । गुणान्यत्वविशिष्टसत्ताभाववान् गुणत्वादित्यादावव्याप्तिवारणाय साध्याभावत्वविशिष्टाधिकरणत्वनिवेशनमावश्यकम् । तथा च कपाले घटभेदो नास्तीति प्रतीतिभयेन घटभेदाभावत्वविशिष्टाधिकरणत्वानुपगमाच्च घटभिन्नं कपालत्वादित्यादौ दोषः । घटत्वं घटभेदाभाव इति प्रतीतिबलेन घटत्वेऽपि घटभेदाभावत्वावच्छिन्नसम्बन्धित्वं स्वीकार्यमिति नात्यन्ताभावत्वनिरूपकत्वविशेषणव्यावृत्त्यसङ्गतिः । परंतु घटत्वादौ घटभेदादिप्रतियोगित्वाङ्गीकर्तॄणां प्रथमकल्पस्यैव सम्यक्त्वमिति मनसिकृत्य स्वनिष्ठत्वनिवेशवैयर्थ्यं शङ्कते—अथेति ।

---

१ ताश्रयत्वेन इति ग पाठः　　२ इत्यादौ इ घ पाठः.

घटभिन्नं घटत्वाभावादित्यादौ घटभेदात्मकसाध्यनिरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटत्वात्मकसाध्याभाववति घटत्वे घटत्वाभावरूपहेतोः वृत्तेरव्याप्तिप्रसक्तावपि, तादृशाव्याप्तेर्घटत्वविवक्षयैव वारणसम्भवात्। घटत्वरूपसाध्याभावस्य साध्यनिरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन साध्यवद्भिन्ने घटेऽवृत्तेः। नन्वेवं तादृशसाध्यस्य तादृशसम्बन्धेन साध्यवद्भिन्नवृत्तिरभाव एवाप्रसिद्ध इति कथमव्याप्तिपरिहार इति वाच्यम्। घटभेदस्य घटत्वाभावसमनियतत्वेन तद्भिन्नतया घटत्वेऽपि समवायसम्बन्धावच्छिन्नायास्तादृशप्रतियोगितायाः सत्त्वेन तादृशप्रतियोगितावच्छेदकसमवायेन साध्यवद्भिन्नवृत्तिघटत्वरूपसाध्याभावस्य प्रसिद्धिसम्भवात्। तादृशाभावघटके स्वनिष्ठत्वस्य प्रतियोगितायां विशेषणत्वेऽपि घटत्वरूपसाध्याभावनिष्ठसाध्यनिरूपितप्रतियोगितायाः प्रसिद्ध्या तद्दोषतादवस्थ्यात्। संयोगिभेदस्य व्याप्यवृत्तित्वरूपवैधर्म्येण [संयोगाभावभेदासम्भवेऽपि], संयोगत्वसमवायविषयत्वाभावाभेदे साध्यकाभावात् स्वरूपसम्बन्धस्यापि साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धतया तेन सम्बन्धेन साध्यवद्भिन्नवृत्तेस्तादृशप्रमाविषयत्वरूपसाध्याभावस्य प्रसिद्ध्या संयोगिभिन्नं गुणत्वादित्यादावव्याप्तेरेव दा-

कृष्णभट्टीय।

संयोगपदेनेति। प्रकृतकारणकगुणत्वसंयोगिभेदस्य व्याप्यवृत्तिसंयोगाभावाभेदसम्भवेन तद्भावमादाय द्वितीयलक्षणस्य [illegible] संयोगाभावाभावस्य संयोगरूपत्वेऽपि व्याप्यवृत्तिसंयोगाभावविरहस्याव्याप्यवृत्तिसंयोगाभावो न संयोगः सामानाधिकरण्यमिति वाच्यम्। संयोगिभेदाभावस्य संयोगरूपत्वात् संयोगिभेदाभावरूपसंयोगाभावाभावस्य संयोगरूपत्वेऽपि व्याप्यवृत्तिसंयोगाभावविरहरूपस्याव्याप्यवृत्तिसंयोगाभावस्य च समवायेन सामानाधिकरण्यमिति संयोगस्वरूपाभावो [illegible]। [संयुक्तस्य समवायसम्बन्धावच्छिन्नस्य [illegible] संयोगवृत्तित्वे [illegible] समवायेन [illegible] इति [illegible]] [illegible] संयोगिभेदाद्धेः [illegible] इति [illegible] [illegible] [illegible]

कृष्णभट्टीय ।

यत्साध्यैकस्थलानुरोधेन साध्यवदवृत्त्यधिकरणताकत्वस्यावश्यकतया कालवृत्तित्वविशिष्टगगनाभावाभावस्य साध्यसमनियतत्वेन साध्यात्मकतया कालवृत्तित्वविशिष्टगगनाभावस्य तदभावात्मन साध्यवदवृत्त्यधिकरणताकत्वस्याधिकरणे हेतुसत्त्वेनाव्याप्तेरुद्धिनिवेश । न च तथापि साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकस्य दैशिकविशेषणतायामव्याहतमिति वाच्यम् । साध्याभावत्वस्य साध्यीयप्रतियोगितया प्रतियोगिताघटितत्वात् । कालिकसम्बन्धावच्छिन्नप्रतियोगिताया एव साध्याभावत्वरूपानुयोगितारूपत्वात् । न च तथापि एतत्कल्पे विशिष्टसत्ताभावाभाव सर्वदेशव्याप्तिवारणाय साध्याभावत्वे तादृशाधिकरणतानिरूपकतावच्छेदकत्वस्य विवक्षितत्वात्तद्विशिष्टाधिकरणतानिवेशावश्यकतया स्वनिष्ठत्व व्यर्थमिति वाच्यम् । एवं तर्हि अव्याप्यवृत्तिसाध्यकाऽव्याप्ते तादृशाधिकरणतामात्रस्य निवेश्यतया विशिष्टाभावपरि सत्ताया सत्त्वेन तदभावविशिष्टबुद्धिवारणाय तदभावत्वेन वृत्तित्वं कल्प्यते । आत्मनि कालिकसम्बन्धावच्छिन्नाकाशाभावाभावो नास्तीति प्रत्यक्षप्रसङ्गस्य गगनाभावीयकालिकसम्बन्धावच्छिन्नाधिकरणताविरहादेव वारणसम्भवात् । अत्र साध्याभाववत्त्वेन वृत्त्यन्तरे मानाभाव इति

न्यायरत्न ।

घटत्वसंयोगसमवायसम्बन्धावच्छिन्नप्रमेयाभावाभावस्य सत्ताद्यात्मकस्य वदता ग्रन्थकृता प्रतियोगित्वस्य प्रकृतलक्षणे स्वरूपसम्बन्धरूपत्वस्यादरणीयत्वात् । अभेदसम्बन्धावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावे दैशिकविशेषणतया साध्ये आकाशादावव्याप्ति । तत्र साध्यस्य च कालिकसम्बन्धावच्छिन्नाभावस्य यो दैशिकविशेषणतासम्बन्धावच्छिन्नाभावस्तस्य साध्यरूपतया दैशिकविशेषणताया अपि लक्षणघटकत्वात् । न च दर्शिताभावस्य साध्यरूपत्वेऽपि तदीयप्रतियोगिता न स्वनिष्ठा साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभावस्यैव स्वपदार्थत्वादिति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्याभावस्य निखिलाभावरूपतया कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिष्ठप्रतियोगितायाः अपि स्वनिष्ठत्वात् । न च कालिकसम्बन्धावच्छिन्नप्रकृतसाध्याभावस्य दैशिकविशेषणतया नित्यमात्रवृत्तितया सर्वदेशासम्बद्धत्वेन न तस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभावत्वं कल्प्यते किन्तु सर्वदेशासम्बद्धगगनाभावादीनाम् । व्यतिरेकिणस्तथात्वे निरुक्तसाध्याभावस्य कालिकाव्याप्यवृत्तितापत्तेरिति वाच्यम् । व्यतिरेकित्व कालिकसम्बन्धावच्छिन्नप्रतियोगिताका-

[1] साध्याभावस्य सत्ताद्यात्मकत्वात् तस्य साध्यवद्वृत्तित्वाभावेनाव्याप्तिरतः साध्यवदवृत्त्यधिकरणताकत्वस्यावश्यकतया कालवृत्तित्वविशिष्टगगनाभावाभावस्य साध्यसमनियतत्वेन साध्याभावतया कालवृत्तित्वविशिष्टगगनाभावस्य तदभावात्मन साध्यवदवृत्त्यधिकरणता तस्याधिकरणे हेतुसत्त्वेन व्याप्तेरभिनिवेश । मे षा॰

योगितावच्छेदकसंबन्धत्वविरहेणाव्याप्तेरनवकाशात्। नच साध्यनिरूपितस्वनिष्ठप्रतियोगितानिवेशे साध्याभावपदोपादानवैयर्थ्यम्।

कृष्णंभट्टीयं।

[ इदं तु चिन्त्यम्। साध्यवद्भिन्नमात्रवृत्तित्वविवक्षणमसङ्गतम्। तथा सति अभावे साध्यीयत्ववैयर्थ्यात्। गगनाभावस्य प्रमेयत्वादेश्च तथात्वादिति। इदंत्ववधेयम्। साध्यवद्भिन्नत्वव्यापकाधिकरणताकत्वं तत्पक्षे साध्यीयत्वस्य सफलत्वसंभवात्। उक्तपूर्वपक्षव्युदासाय। एवंच स्वनिष्ठत्वस्याप्यावश्यकत्वमेवेति। ]

परेतु समवायेन सत्तान्यप्रमेयसाध्यकद्रव्यत्वप्रकारकप्रमाविषयकहेतुक प्रभृतिस्थलसंग्रहाय साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नानुयोगिताकस्वनिष्ठप्रतियोगितेति विवक्षितम्। मयैवं स्वनिष्ठत्वं व्यर्थम्। कालिकसंबन्धावच्छिन्नगगनाभावसाध्यके कालिकसंबन्धावच्छिन्नसाध्याभावाभावत्वस्य साध्यव्यापकतावच्छेदकत्वादिति वाच्यम्। अवच्छिन्नत्वं व्यापकत्वम्। तथाच तादृशसाध्याभावाभावनिष्ठानुयोगितया साध्यव्यापकतावच्छेदकरूपव्यापकत्वेन तत्सार्थक्यात्। अन्यथातिरिक्तवृत्तिधर्मस्यावच्छेदकतास्वीकारे द्रव्यवृत्तित्वविशिष्टाभावसाध्यके यथोक्तसाध्याभावस्य च कालिकसंबन्धावच्छिन्नाभावो नित्यद्रव्यमात्रवृत्तित्वविशिष्टाभावसाध्यतावच्छेदकावच्छिन्नानुयोगितामादायाव्याप्तेरिति। एवंच नित्यवृत्तित्वविशिष्टाभाववान्नित्यत्वादित्यादौ साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नाभावस्य यः कालिकसंबन्धावच्छिन्नाभावत्वविशिष्टानुयोगितया साध्यव्यापकतावच्छेदकरूपेत्वात्तन्निरूपितप्रतियोगितावच्छेदककालिकसंबन्धेन साध्यवद्भिन्नवृत्तिसाध्याभाववति महाकाले हेतुसत्त्वेपि नाव्याप्तिरित्याहुः।

वस्तुतस्तु विशिष्टसत्ताभावाभावो द्रव्यत्वमेव। कालवृत्तित्वविशिष्टकालाभावाभाव. कालत्वाभाव.। एवंच गगनाभावे कालिकसंबन्धावच्छिन्नैककालप्रतियोगिता ननु दैशिकविशेषणतासंबन्धावच्छिन्नापि। कालत्वाभावीयप्रतियोगितया गगनाभावेऽनङ्गीकारादिति स्वनिष्ठत्वनिवेशनमावश्यकं। धर्मनिवेशप्रकार प्रागुक्तः। साध्यनिरूपितत्व तु साध्यव्यापकतावच्छेदकतावच्छेदकानुयोगिताकत्वमिति न साध्यवद्भिन्नमात्रवृत्तित्वपर्यन्तनिवेश इति ( सोध्याभावपदेति। साध्यांशनिवेशोऽयर्थः। एवं सति गगनाद्यभा-

न्यायरत्नं।

हेतोरिति। यदि च साध्यनिरूपितत्वादृशसाध्याभावनिष्ठप्रतियोगितावच्छेदकयत्संबन्धेन साध्यवद्भिन्नवृत्तित्वं तादृशसाध्याभावस्य वर्तते तेन संबन्धेन

---

१ [] एतच्चिह्नान्तर्गत वाक्यम् ना पु नास्ति. २ विषयत्वम् इति मै पाठः. ३ रूपव्यापकत्वात् इति मै पाठ.. ४ () एतच्चिह्नान्तर्गत वाक्य ना. पु. नास्ति.

अभावान्तरनिष्ठप्रतियोगितायाः साध्यनिरूपितत्वविरहेणैव तदव्यावृत्ते-
रिति वाच्यम् । स्वपदार्थस्य द्विधाऽनिवेशेन साध्याभावनिष्ठसाध्यी-

यत्वं मदीयं ।

*यस्य साध्यवद्भिन्नवृत्तित्वानुयोगितया ग्रहणापत्तिशङ्कां वारयति—अभा-*
*वान्तरेति ।* साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नाभावभिन्नाभावेत्यर्थः ।)

(अभावान्तरेति । यद्यपि कालिकसंबन्धावच्छिन्नाकाशाभावाभावसा-
ध्यके कालिकसंबन्धावच्छिन्नसाध्याभावान्तरनिष्ठप्रतियोगितायाः साध्यनि-
रूपितत्वादसङ्गतिः । तथापि साध्यवद्भिन्नवृत्त्यभावे साध्यवत्त्वानुपादाने स-
निवेशे स्वपदार्थे यदि साध्यतावच्छेदकसंबन्धो न निवेश्यते तदा तादृशा-
भावस्य स्वपदार्थत्वेऽपि तन्निष्ठप्रतियोगितावच्छेदकीभूते दैशिकविशेषणतासंब-
न्धेन तस्य न साध्यवद्भिन्नवृत्तित्वसंभवः । अथ तन्निवेश्यते तादृशकालिकसं-
बन्धेन काल एव तादृशाभावान्तरसत्त्वादव्याप्तिरित्यभावान्तरेत्यस्य साध्य-
तावच्छेदकधर्मावच्छिन्नाभावभिन्नाभावेत्यर्थात्, साध्यनिरूपितत्वेस्वस्वाभा-
वान्तरस्य साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नप्रतियोगिताकत्वेत्यर्थोऽत्रा भा-
सङ्गतिः । स्वपदार्थस्येति । साध्यवद्भिन्नवृत्त्यभावे साध्यवत्तानिवेशनैय-
र्थ्यमिति शङ्काभिप्रायेण एकत्रैव साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नाभाव-
निवेशस्यैव प्रयोजनान्तरानुरोधेन स्वीकार्यत्वेऽपि समभिव्याहृतशब्दान्तरप्रति-
पाद्यस्यैव स्वशब्देन परामर्शात्तादृशस्वनिष्ठप्रतियोगितावच्छेदकयत्संबन्धेन
साध्यवद्भिन्नवृत्तित्वं साध्याभावस्येति तादृशसाध्याभावनिष्ठप्रतियोगिता-
वच्छेदकसंबन्धेन तत् स्वत्वेन वा निवेश्यम् । तथाचानयत्वा संबन्धघ-
टकतया साध्यवद्भिन्नवृत्तित्वानुयोगितया तादृशसाध्याभावो निवेशित
एव । एवंच पुनः साध्यवत्तानिवेशप्रयोजनमनीयानुद्याय तत्पदद्वैय-
र्थ्यमिति )। नेच स्वपदेन साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नाभावोक्तेः
साध्यकालिकविशेषणतासंबन्धेन काल एतादृशाभावान्तरस्य सत्त्वादव्याप्तिरिति
वाच्यम् । एवं सत्यभावान्तरनिष्ठप्रतियोगितायाः साध्यनिरूपितत्वाभिधान-
वैयर्थ्यात् । तथापि साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नाभावत्वविशिष्टनि-
रूपितत्वस्यैवोक्त्यावश्यानुवृत्तिरिलाभिमान । वस्तुतः समभिव्याहृतशब्दा-
न्तरप्रतिपाद्यस्यैव स्वपदेन परामर्शात्, साध्यनिरूपितस्वनिष्ठप्रतियोगिताव-
च्छेदकयत्संबन्धेन साध्यवद्भिन्नवृत्तित्वमभावस्येत्युक्तौ उक्तस्थले स्वपदाभाव-
पदाभ्यां कालिकसंबन्धावच्छिन्नसाध्याभावस्योपादाने तस्य व्याप्यवृत्तित्वे
तथाविधदैशिकविशेषणतासंबन्धेन साध्यवद्भिन्नकालवृत्तित्वात्, अव्याप्यवृ-
त्तित्वे च अधिकरणभेदेन अभेदाय हेतुमत्- *साध्यवद्भिन्नवृत्तित्वस्वरूपाभाव*

१ अन्यत्वेति- मै. पा. २ तथापीत्यादि वैयर्थ्यमिति पर्यन्तमन्थ मै. पु. नास्ति, सच प्रक्षिप्त इव च भाति. ३ वस्तेत्यारभ्य अङ्कान्तपर्यन्ता वा. पु. न दृश्यते.

कृष्णंभट्टीयं।

न दोष । एवञ्च साध्यप्रतियोगिकाभावस्य भावान्तरपदार्थत्वाभावासङ्गतिः । साध्यवद्भिन्ननिरूपितस्वनिष्ठप्रतियोगितावच्छेदकयत्संबन्धेन साध्यवद्भिन्नवृत्तित्वं साध्यतावच्छेदकावच्छिन्नाभावस्येत्युक्तौ साध्यनिरूपितसाध्यतावच्छेदकावच्छिन्नाभावनिष्ठप्रतियोगितावच्छेदकयत्संबन्धेन साध्यवद्भिन्नवृत्तित्वं स्वस्येति नोक्तौ समवायावच्छिन्नवह्न्यभावमादायाव्याप्तिः । तस्य वह्न्यसमवाये कालिकाव्याप्यवृत्तित्वेऽपि ह्रदपर्वतयोः साध्यवद्भिन्नहेतुमतोः सद्भ्यस्यैव तस्य व्याप्यवृत्तेरैक्येन सत्त्वात् । एव तत्र साध्यतावच्छेदकसंबन्धावच्छिन्नाभाव प्रवेशयोक्तो महानसीयवह्न्यभावमादायाव्याप्तिः स्वपदेन तस्यैव लाभादिति साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नाभाव एव साध्यवद्भिन्नवृत्तित्वानुयोगितया प्रवेश्य. । तथाच संबन्धघटकतया स्वपदेन तस्यैव निवेश इति समाधत्ते—**स्वपदार्थस्येति** । एकत्र निरुक्तसाध्याभावत्वनिवेशे आवश्यके पुनस्तस्य स्वपदार्थतया न प्रयोजनमनीषा भवति । अतस्तत्पदयोरैव व्यावर्त्यं ।

तादृशसाध्याभाववत्त्व निवेशनीयं समवायस्य घटात्मकसाध्याभावनिष्ठप्रतियोगितावच्छेदकत्वाभावात् तमादायाव्याप्तिरित्युच्यते, तदा घटभेदस्य घटत्वाभावसमनियतत्वेन तदभिन्नत्वोपगमेन घटत्वस्य तत्प्रतियोगित्वव्यवस्थापनस्य निष्फलत्वापत्तिः । घटत्वस्य घटभेदप्रतियोगित्वाभावेऽपि घटात्मकसाध्याभावमादाय घटभेदसाध्यके पटत्वादौ लक्षणगमनसम्भवादिति चेदत्र ब्रूम. । तादात्म्यसंबन्धेन घटस्य साध्यतास्थले घटतादात्म्यस्यैव साध्यत्वोपगमकर्तृप्राचीनमतेनैवैतत्परिष्कारकरणाद्घटभेदाभावस्य घटत्वमानत्वानुगतत्वेऽपि क्षतिविरहात् । अस्तु वा तादात्म्यसंबन्धेन घटादेः साध्यत्वं तथापि न क्षतिः साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकत्वान्यतरावच्छेदकसंबन्धस्यैव विवक्षणादित्यलं (पल्लवितेन) ॥

ननु साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबन्धेन साध्याभाववत्त्वनिवेशे लक्षणे साध्याभाववद्वैयर्थ्यं तदनिवेशे स्वपदस्य साध्यवद्भिन्नवृत्तित्वरूपेण गगनाभावपरिचायकत्वप्रसक्तावपि गगनाभावादिनिष्ठप्रतियोगितायाः साध्यनिरूपितत्वाभावेन साध्यानिरूपितप्रतियोगिताया गगनाभाववृत्तित्वाभावेन स्वनिष्ठसाध्यीयप्रतियोगितावच्छेदकसंबन्धरूपपरम्परासंबन्धघटकवृत्तित्वांशे गगनाभावप्रतियोगिकत्वाभावेन तादृशपरम्परया साध्याभावातिरिक्तवस्तुसंबन्धताया असम्भवादिति स्वपदप्रयोगमूलकपरम्परासंबन्धविवक्षाभिमानेन शङ्कते—**नचेति** । दर्शितविशिष्टस्य साक्षात्संबन्धत्वेन विवक्षितं न तु परम्परात्वमिति स्पष्टतया दर्शयितुं साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबन्धेन साध्याभाववत्त्वमित्यत्र द्विधानिविष्टसाध्याभावघटितवाक्यार्थं शब्दान्तरेणाभिधाय साध्याभाववत्त्वनिवेशसाफल्यं स्पष्टयति—**स्वपदार्थस्य द्विधा निवेशेनेति** । साध्या-

यत्प्रतियोगितावच्छेदकसंबन्धेन साध्याभावत्वनिवेशध्रौव्येण तत्पदवैयर्थ्यानवकाशात्। तादृशसंबन्धेन साध्यवद्भिन्नवृत्तित्वमात्रनिवेशे साध्यवद्भिन्नवृत्त्यभावान्वयवति हेतोर्वृत्त्यानुपपत्तेश्चेत्याहुः ॥

कृष्णंभट्टीयं।

कस्य निष्काशने अपरत्र निष्काशनस्य एकत्र प्रवेशे अपरत्र प्रवेशस्य च सिद्धेरिति न वैयर्थ्यशङ्कावकाश इत्यर्थः। एतेन साध्यवद्भिन्नमात्रवृत्तित्वनिवेशस्थले साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नप्रतियोगिताकत्वं व्यर्थं पृथिवीत्वाभावद्रव्यत्वाभावान्यतरस्य कालिकसंबन्धेन द्रव्यत्वाभावादेश्च साध्यतायां द्रव्यत्वात्मकसाध्याभावस्य साध्यवद्वृत्तित्वेन लक्षणस्य घटकतयाऽदोषादिति समाहितम्। संबन्धघटकतया यथोक्तसाध्याभावादन्यत्र साध्यवद्भिन्नमात्रवृत्तित्वानिर्वाहात्। एतेन साध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वानुपादाने (साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबन्धेनेत्यादिक्रमेण निवेशे स्वपदेन विशिष्टैकाभावनिवेशात् महानसीयवह्न्यभावमादाय व्याप्तिः। किंतु) धूमवान्वह्नेरित्यादौ संयोगसंबन्धावच्छिन्नद्रव्यसामान्याभावमादायातिव्याप्तिस्तदभावस्य धूमादिरूपत्वात्। यद्विच साध्यनिरूपितपच्छिष्टप्रतियोगितावच्छेदकसंबन्धेन यस्य यस्य साध्यवद्भिन्नवृत्तित्वं तत्तदधिकरणवृत्तित्वाभावकूटं विवक्षितम्। अथवा स्वाश्रयनिष्ठसाध्यनिरूपितप्रतियोगितावच्छेदको यः स्वाश्रयनिष्ठसाध्यवद्भिन्नवृत्तितायाः अवच्छेदकसंबन्धः तेन संबन्धेन साध्याभावाश्रयाधिकरणवृत्तित्वाभावः धूमाभावसाधारणं च साध्याभावत्वमित्यदोष इत्युच्यते तदा वह्निमान्धूमादित्यादौ महानसीयवह्न्यभावमादायाव्याप्तिरिति तदुपादानमावश्यकमिति ध्येयमित्यादेयः। साध्यवद्भिन्नवृत्तित्वानुयोगितावच्छेदकत्वेन साध्यस्य न निवेशः। किंतु स्वपदस्थाने निरुक्तसाध्याभावपदं योजयित्वा संबन्धघटकतयैव साध्याभावनिवेश इत्यत आह—साध्येति। [अत्र वह्निमान्धूमादित्यादौ स्वनिष्ठप्रतियोगितावच्छेदककालिकसंबन्धमुदस्याय साध्यनिरूपितत्वनिवेश इति ध्येयम्]। अथवा लक्षणे साध्याभावस्य स्वपदार्थत्वेन न निवेशः किंतु साध्याभावपदार्थत्वेनेत्यभिप्रेत्य समाधत्ते—स्वपदार्थस्येति। लक्षणं निरूपयति—साध्याभावेति। कुत इत्यत आह—तादृशसंबन्धेनेति। अभावान्तरम्। गगनाभावसमवायावच्छिन्नवह्न्यभावमहानसीयवह्न्यभावादिः। अनुपपत्तेश्चेति चकारः भ्रमादिकः। यद्वा तादृशसंबन्धो वह्न्यभावीयस्वरूपसंबन्ध एवेत्या-

न्यायरत्नं।

निरूपितेत्यादिसंबन्धघटकतया साध्यवद्भिन्नवृत्तिसाध्याभाववदवृत्तित्वलक्षणघटकतया चेत्यर्थः। निवेशेनेत्यन्त निवेशध्रौव्ये हेतुस्वपदं च साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबन्धरूपविशिष्टवृत्तित्वाद्यो गगनाभावप्र-

१ केचित्तु इ. मे. पा. २ मे. पु. अधिकम्. ३ साध्याभावत्वम् इति मे. पाठः. ४ साध्याभावमनिवेश्य प्रकारान्तरेण निवेशे दूषणमाह—. ५ मे. पु. अधिकम्.

**अत्रेदं बोध्यम्** । साध्यवत्त्वग्रहविषयसंबन्धेन, साध्यनिरूपितप्रतियोगितावच्छेदकसंबन्धेन वा अनुमित्यौपयिकव्याप्तिशरीरे अभाववत्त्वनिवेशेन संभवः । साध्यादिभेदेन व्याप्तेर्भेदात् । लाघवेन तत्तत्साध्यकस्थले तत्तत्साध्याभाववति दैशिककालिकविशेषणता, समवायादिसंसर्गाणामेव विशिष्याभावसंबन्धतया निवेशौचित्यात् । उक्तरूपेण विशेषणताविशेषादीनां सम्बन्धता .. अत्यन्ताप्रामाणिकतया तद्रूपावच्छिन्नस्य सम्बन्धविधया व्याप्तिघटकत्वायोगाच्च । परंतु यादृशसाध्यकस्थले यादृशसम्बन्धोऽभावसंबन्धतया व्याप्तिघटकत्व-

कृष्णभट्टीय ।

साक्षात्सम्. । विशेषणतासामान्यमिति तत्तात्पर्य. ] । अत्रेदमस्मन्निर्णीतमवसेयम् । विशेषरूपेण संबन्धत्वोपगमेऽपि निरवच्छिन्नविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकाभाव कपिसंयोगरूपो नोपगम्यते प्रयोजनाभावादिति आशङ्क्येत्येतदुक्तमिति । नच सिद्धान्ते यत्र साध्यवत्त्वाभावा(दर)प्रसिद्धिस्तत्र संबन्धनिवेशसंभव इति वाच्यम् । भावाभावसाधारणविशेषणताव्यक्तीनां तादृशस्थले [ मानाभावात् । अन्यादृशप्रतिबन्धकत्वस्य निवेशनीयत्वात् । धर्मितावच्छेदकतासंबन्धेन प्रतिबन्धकतापक्षे दोषाच्चेति । ]

न्यायरत्नं ।

प्रतियोगितासम्बन्धावच्छेदेऽपि विशिष्टघटकविशेष्यत्वे दैशिकविशेषणतारूपे गगनाभावप्रतियोगितासमानाधिकरणतया साध्याभाववत्तानिवेशे गगनाभाववत्सादाध्यव्याप्तिः स्यादेवेति भावः । वस्तुतस्तु परंपरासम्बन्धनिवेशेऽपि समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावमादाय वह्निमान्धूमादित्यादावव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाभावनिवेश आवश्यक एवेति न साध्याभाववद्वैयर्थ्यम् ॥

केचित्तु साध्यनिरूपितेत्यादि । तत्सम्बन्धनिवेशेऽपि साध्याभाववत्त्वेनार्थ्ये । तथापि साध्याभाववत्पदमात्रेण साध्यनिरूपितनिरवच्छिन्नप्रतियोगितावच्छेदकसंबन्धेन साध्यवद्भिन्नत्वलाभसंभवेनैव निवेश । शब्दस्य विशेष्यव्यक्तिपरत्वनियमेन तत्तद्व्यक्तिविशेषप्रवृत्तादृशीय एव क्वचित् साध्यदेनोऽद्वेष्टा । तथाच गगनाभावस्थले प्रतियोगितानाऽपि साध्यप्रसिद्धित्वे सादेनोपादानाथैव सद्भावाभावसाध्यतासम्बन्धे इति तात्पर्ये—न चेति । तत्तगतानुसारं परित्यज्य साध्याभाववदेव निवेश । साध्याभाववत्त्वस्तु विशेष्यव्यक्तिपरत्वनियमाभावादन्यादृशसम्बन्ध साध्याभाववत्त्वेन आवश्यक इत्याशयेन समाधानमाह—स्वपदार्थमेवेति । स्वपदार्थ तेन स्वपदार्थमेव परं इत्यत्र ।

१ अभावत्वस्य सम्बन्धत्वत्व इति से इ ८ २ तस्य इ. मे. प. १ मं. उ. अधिकम्.

त्परिचयायैव दर्शितोक्त्यः । तथाच यादृशसम्बन्धेन प्रकृतसाध्यवति तद्भिन्नवृत्तिसाध्याभावो न वर्तते तादृशसम्बन्धेन तद्वत्त्वं निवेश्यमित्युक्त्यैव तत्परिचयसंभवादलं वाग्जालेन । साध्याभाववत्पदेन

कृष्णभट्टीय ।

भावाभावादिति । यादृशसंबन्धेनेत्यादि । इदं तु चिन्त्यम् । साध्यवद्भिन्नवृत्तिसाध्याभावसाध्यवन्निरूपितयादृशसम्बन्धावच्छिन्नवृत्तित्वाभाववानिति

न्यायरत्न ।

यादृशसंबन्धेन प्रकृतसाध्यवति तद्भिन्नवृत्तिसाध्याभावो न वर्तत इति । अथ यादृशसम्बन्धेनेत्यस्य साध्यवन्निरूपितयत्सम्बन्धावच्छिन्नवृत्तित्वाभाववान् यादृशाभाव इत्यर्थे सत्ताभाववान् द्रव्यत्वात् समवायासंग्रहः । साध्यवन्निरूपितसम्बन्धावच्छिन्नवृत्तेरप्रसिद्धेः । यदि च तादृशसाध्याभावनिष्ठसाध्यवन्निरूपितवृत्तित्वं यत्सम्बन्धावच्छिन्नमित्यर्थस्तदा ऽयमात्मा ज्ञानादित्यादौ साध्याभावे साध्यवद्वृत्तित्वाप्रसिद्धिः । यदि च साध्याभावनिष्ठयत्सम्बन्धावच्छिन्नवृत्तित्वं साध्यवन्निरूपितमित्यर्थस्तदा, विशिष्टसत्ताभाववान् जातेः समवायासंग्रह इति चेन्न । यत्सम्बन्धावच्छिन्नतादृशसाध्याभाववत्त्वविशिष्टाधिकरणत्वाभावः । साध्यवद्वृत्तिरित्येतादृशसम्बन्धस्य विवक्षणान्न पूर्वोक्तदोषाणामवकाशः । साध्याभाववत्त्वविशिष्टाधिकरणत्वाभावनिवेशात् विशिष्टसत्ताभाववान् जातेरित्यत्र समवायासंग्रहः । नचैवं विवक्षणेऽपि शब्दज्ञानान्यतरत्वसाध्यके नित्यज्ञानत्वहेतौ विषयितासम्बन्धावच्छिन्नतादृशसाध्याभाववत्त्वविशिष्टाधिकरणत्वाभावस्य साध्यवति शब्दे कालिकपरिगणितसम्बन्धस्य महाकालव्याप्तिरिति वाच्यम् । साध्यवद्वृत्तिरित्यनेन साध्यव्यापक इति विवक्षणात् । नच तथाप्ययमात्मा शब्दज्ञानान्यतरत्वादित्यादौ कालिकसम्बन्धावच्छिन्नतादृशसाध्याभावाधिकरणत्वाभावस्य साध्यव्यापकत्वात् कालिकसम्बन्धमादायाव्याप्तिः । एतेन शब्दज्ञानान्यतरत्वसाध्यके नित्यज्ञानत्वहेतौ विषयितासम्बन्धव्यावर्तनाय यत्सम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नप्रतियोगिताकप्रकृतसाध्यवतोऽन्योन्याभावः साध्यवद्भिन्नवृत्तिसाध्याभावे वर्तते, यद्वा प्रकृतसाध्यवत्त्वावच्छिन्नानुयोगिताकभेदप्रतियोगितायाः येन सम्बन्धेन तादृशसाध्याभावोऽवच्छेदकः, यद्वा यत्सम्बन्धावच्छिन्नतादृशसाध्याभावनिष्ठावच्छेदकताकप्रतियोगिताकसाध्यवद्भेदः विशेषणतया न वर्तते तेन सम्बन्धेनेति विवक्षणमप्यपास्तम् । उक्तस्थले तादृशकालिकसम्बन्धमादायाव्याप्तेरिति वाच्यम् । साध्यवद्वृत्तिरित्यनेन साध्यव्यापकत्वे सति साध्यव्याप्यत्वस्य विवक्षणात् । साध्यव्याप्यत्वविवक्षणेनैव शब्दज्ञानान्यतरत्वसाध्यके विषयितासम्बन्धव्यावर्तनेऽपि नित्यत्वसाध्यके महाकालव्याप्तिहेतौ कालिकसंबन्धव्यावर्तनाय साध्यव्यापकत्वनिवेश आवश्यकः । अत्रेदं बोध्यं । निरुक्तसंबन्धपरिचायकरूपस्यापि व्यापकत्वव्याप्यत्वघटितत्वेन पूर्वोक्तसम्बन्धपरिचायकरूपापेक्षया ला

साध्याभावत्वविशिष्टाधिकरणं विवक्षणीयम् । तेन गुणान्यत्वविशि-

कृष्णंभट्टीयं ।

नार्थः । दर्शिताकाशाभावाभावसाध्यके समवायकालिकसंबन्धासंग्रहापत्तेः । साध्यवति तेन संबन्धेन वृत्तित्वाप्रसिद्धेः । साध्याभावस्य साध्यवद्वृत्तित्वं यत्संबन्धानवच्छेद्यमित्यपि नार्थः. [ [1]आत्मत्वादिसाध्यके साध्याभावे साध्यवद्वृत्तित्वाप्रसिद्धेः । अथ यत्संबन्धावच्छिन्नताकसाध्याभावनिष्ठाभेयत्वं साध्यवन्निरूपितमित्यर्थः. । ] विशिष्टसत्ताभावसाध्यके समवायासंग्रहात् । नापि यत्संबन्धावच्छिन्नस्याभावः साध्यतावच्छेदकसंबन्धेन साध्यव्यापक इत्यर्थः । साध्यसामानाधिकरण्योक्तौ सत्तादिसाध्यके कालिकसंबन्धसंग्रहापत्तेः । कपिसंयोगाभावाभावस्य व्यापकत्वार्थं व्यापकतायां प्रतियोगिवैयधिकरण्यमिति युक्तम् । कालिकसंबन्धावच्छिन्नवह्न्यभावाभावस्य केवलान्वयितया कालिक[संबन्ध]संग्रहप्रसङ्गात् । इतोऽपि कयोर्यत्संबन्धावच्छिन्नस्याभावः साध्यमिति । केचित्तुकारैरेवोक्तत्वात् घटभेदघटत्वाभावयोर्भेदमनुरुध्य स्वयं साध्यवत्त्वेत्यादिप्रकारादरणात् । सत्तान्यप्रमेयसाध्यकस्थलानुरोधेन साध्यव्यापकनिरूपितप्रतियोगितायाः निवेशोऽपि केचित्तुकारमतापरित्यागाय । अथ साध्यवन्निष्ठवृत्तिसाध्याभावस्य यत्संबन्धावच्छिन्नाधिकरणतासामान्यं साध्यवति नास्तीति निष्कर्षः । तेन सत्ताभावसाध्यके न दोषः । इदमपि कालिकसंबन्धावच्छिन्नाधिकरणतावारणाय सामान्यपदम् । विशिष्टसत्ताभावसाध्यकस्थले समवायसंग्रहाय साध्याभावत्वविशिष्टनिरूपितत्वं देयमिति चेत्, आत्माकाशादित्यादौ कालिकविषयितादिसंबन्धासंग्रहापत्तेः । तदुदितस्य साध्यवत्ताग्रहविरोधिग्रहविषयसंबन्धेन साध्याभाववत्त्वघटितव्यभिचाराविरोधिनोऽव्यभिचारपदार्थत्वानौचित्यात् । आत्मत्वाकाशत्वादिसाध्यकादिस्थले दैशिकविशेषणतावच्छिन्नाव्यभिचारित्वासत्त्वेऽपि कालिकादिपदितत्वदर्निव्याप्तेर्दुर्वारत्वाच्च । [ [2]एतेन यत्संबन्धावच्छिन्नस्याभावः साध्यव्यापक इत्यर्थः । साध्यसामानाधिकरण्योक्तौ सत्तादिसाध्यके कालिकसंबन्धसंग्रहप्रसङ्गः । कपिसंयोगाद्यभावाभावस्य साध्यव्यापकत्वार्थं व्यापकतायां प्रतियोगिवैयधिकरण्यं देयम् । एवं वह्न्यभावस्य कालिकसंबन्धावच्छिन्नाभावस्य केवलान्वयित्वेऽपि न कालिकसंबन्धसंग्रह इत्यपास्तमिति ] गोसास्नादिमत्त्वादौ कालिकसंबन्धावच्छिन्नगगनाभावस्य कालिकदैशिकविशेषणतासंबन्धावच्छिन्नाधिकरणतायाः साध्यवद्वृत्तित्वेन विषयतासंबन्धसंग्रहेण नातिव्याप्तेश्च, क्रियाप्रत्ययोरेव कालत्वात् । सत्तामात्रस्य तथात्वे तु तत्तत्साध्यकसद्धेतावव्याप्तिरिति । विशिष्टेति । विशिष्टाधिकरणतायां

---

१ येन संबन्धेन साध्यवद्वृत्त्यभिन्नत्वप्रतियोगिनि. बा. पा. २ मै. पु. अधिकम्.
२ प्रतियोगिनैव्यधिकरणाच. से. पा. ४ म. पु. अधिकम्.

द्वसत्ताभाववान् गुणत्वादित्यादौ विशिष्टस्यानतिरिक्ततया सत्तारूप-साध्याभावस्य गुणादौ सत्वेपि न क्षतिः । गुणे गुणान्यत्वविशिष्टसत्ताभावो नास्तीत्यप्रत्ययात् । तत्र तादृशाभावत्वविशिष्टाधिकरण-(त्वा)तानभ्युपगमात् । अथैतल्लक्षणे घटत्व-घटाकाशसंयोगान्यतराभाववान् आकाशत्वादित्यादावव्याप्तिः । घटत्वस्य व्याप्यवृत्तितया तद्घटितान्यतराभाववद्भिन्ने घटे वर्तमानस्य घटाकाशसंयोगात्मकसाध्याभावस्य हेत्वधिकरणे गगनेऽपि वृत्तेः । निरवच्छिन्ने साध्याभाववत्तानिवेशो च साध्यवद्भिन्नवृत्तित्वनिवेशवैयर्थ्यादिति चेन्न । एतल्लक्षणकर्तृमते स्वप्रतियोगिसामानाधिकरण्य-स्वप्रतियोगिवैयधिकरण्यरूपविरुद्धधर्माध्यासोऽभाव(स्य) भेदक इत्येतादृशयुक्त्या द्रव्यवृत्तिसंयोगाभावगुणवृत्तिसंयोगाभावयोर्भेदसिद्धिरित्यव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्तिः समाधीयते । तथाच घटाकाशसंयोगस्य उक्तान्यतराभावप्रतियोगित्वेऽपि न तदभावरूपता । तथासति तादृशविरुद्धधर्मयोः समावेशापत्तेः । तयोर्विरोधाभावे संयोगाभावस्यापि अधिकरणभेदेन भेदासिद्धेरव्याप्यवृत्तिसाध्यकस्थले सर्वत्रैवाव्याप्तेः । एतदभिप्रायेण लक्षणान्तरस्यावतरणीयत्वादिति गग(ने)नातिरिक्तएव तदभावः स्वीकरणीयः । स च न साध्यवद्भिन्न-

कृष्णभट्टीयं ।

साध्यवद्भिन्नवृत्तिसाध्याभावनिरूपितत्वनिवेशावाव्याप्यवृत्तिसाध्यकाव्याप्तिः । अन्यस्तु साध्यवद्भिन्नश्चासौ साध्याभाववांश्चेति कर्मधारये सामानाधिकरण्य-संबन्धेन साध्यवन्निवेशात्साध्यसमानाधिकरणान्यसाध्याभावाधिकरणत्वेऽर्थः । तत्र सत्ताधिकरणतायाः साध्यसमानाधिकरणतया विशिष्टाधिकरणताया एव तदन्यत्वादव्याप्तिरिति किं विशिष्टाधिकरणत्वविलक्षणेनेति चेन्न । तथा सति साध्याभावप्रवेशवैयर्थ्यात् । घटत्वेति । घटत्वघटाकाशसंयोगोभयाभावसाध्यके तु साध्याभावत्वे साध्यवद्भिन्नवृत्तितावच्छेदकत्वं निवेश्याव्याप्तिवारणं सुकरमिति तत्त्वोक्तम् । निरवच्छिन्नेति । संयोगभिन्नगुणत्वादित्यादावतिरिक्तस्य संयोगत्वप्रकारकप्रमाविषयत्वरूपस्य वा साध्याभावस्य प्रवेशादव्याप्तिः । गगन इति । अयं च गगनघटसंयोगावच्छेदकदिगाद्यवच्छेदेन बोध्य । साध्यवद्भिन्न इति । न च निरवच्छिन्नवृत्तिकसा-

१ साध्यवद्भिन्नप्रसिद्धिः साध्यस्य केवलान्वयित्वादिति तत्त्वोक्तम्. मै. पा.

वृत्तिरिति न दोषः। साध्यवह्निभिन्ने वर्तेत इत्यानेनानवच्छिन्नाया एव वृत्तेर्विवक्षणाद्घटाकाशसंयोगात्मकाभावमादाय न दोष इति तु श्रद्धेयम्। तथासति सुषुप्त्यादिकालावच्छेदेन असमवायात्मवृत्तौ स्वाश्रय(त्व)घटितसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानत्वाद्यभावे साध्ये सुखाद्यव्याप्तिः। तत्र साध्यवह्निभिन्ने ईश्वरे तादृशसम्बन्धेन निरवच्छिन्नवृत्तिकस्य ज्ञानत्वादिरूपाभावस्य तेन सम्बन्धेन सुखाद्यधिकरणे असमवायात्मनि(अपि)वृत्तेः। उत्पत्तिकालावच्छिन्नघटादिवृत्तितादृशसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावादिसाध्यकघटत्वादिहेतावव्याप्तिश्च। संयोगाभावनिष्ठयोः व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोः प्रतियोगिसामानाधिकरण्यप्रतियोगिवैयधिकरण्ययोः वक्ष्यमाणरीत्या न विरोध इति। इति द्वितीयलक्षणम् ॥

कृष्णभट्टीय।

व्याभावनिवेशेनैवाव्याप्यवृत्तिसाध्यकाव्याप्तिवारणात् साध्यवद्भिन्नीयत्व व्यर्थमिति वाच्यम्। तत्परित्यागस्येष्टत्वात्। अथ स्वानाश्रयनिरवच्छिन्नवृत्तित्वानुयोगिताविशेषोभयसम्बन्धेन साध्यवत्त्वमभावे निवेश्यमिति न वैयर्थ्यमिति चेन्न। सम्बन्धान्तरसहितानुयोगितायाः सम्बन्धत्वस्याकल्पकत्वात् निरवच्छिन्नवृत्तिकत्वमनुयोगिताविशेषोभयमात्रस्य संसर्गत्वेनोपपत्तेश्च। अन्यथा स्वानाश्रयवृत्त्यभावाश्रयत्वोभयसम्बन्धेन साध्यवत्त्वस्याधिकरणतावैशिष्ट्यसाधनसम्भवात् कर्मधारयनिराकरणानुपपत्तिरिति। तथासतीति। स्वमते च तादृशज्ञानत्वाभावरूपसाध्याभावस्य प्रतियोगिवैयधिकरण्याद्यभ्यासेन ज्ञानत्वादिभिन्नतयाऽधिकरणभेदेन भिन्नत्वादव्याप्तिः। ईश्वरे नित्यसुखादीकर्तृमते व्यभिचार इत्यत सुखादावित्यादिपदम्। आदिना दुःखादिपरिग्रहः। इति द्वितीयलक्षणम्।

न्यायरत्न।

घनाभावादवच्छिन्नत्वोक्तिर्विचारणीयैवेति। इत्यनेनेति। तत् तथानमेने व्यर्थ। अनवच्छिन्नवृत्तिकत्वरूपेति। तथाच तादृशवृत्तित्वलाभायैव साध्यवद्भिन्नीयत्वं ननु लक्षणघटकमम साध्यवद्भिन्ने ईश्वरे इतितु स्वरूपकीर्तनमात्र। ननु तदंशस्य लक्षणघटकत्वाभिप्रायेण तादृशवृत्तित्वनिवेशे तदंशस्य व्यर्थत्वादिति ध्येयम्। तथा सतीति। स्वमते तादृशज्ञानत्वाभावाभावस्य विरुद्धधर्माध्यासभियाऽतिरिक्तत्वस्वीकारेणाधिकरणभेदेन भेदादव्याप्तिरिति भावः।

---

१ निरवच्छिन्नवृत्तित्वरूपार्थेनविवक्षितार्थे तात्पर्याद् इति गे पाठ २ इत्यभिप्रायेण इति मे पाठ ३ साध्याभावस्य मे पा

**कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह— साध्यवदिति ।**

---

अव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्त्या लक्षणान्तरमवतारयति ।

(अथ तृतीयलक्षणं) कर्मादाविति । इदं त्ववधेयम् । द्रव्यवृत्तिसंयोगाभावो गुणादौ न स्वीक्रियते । अपितु द्रव्यत्ववद्वृत्तिसंयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावएव संयोगाभावत्वं कल्प्यते। अनन्तगुणाद्यधिकरणे संयोगाद्यभावकल्पनामपेक्ष्य तथाविध एकाभावे संयोगा(द्य)भावत्वकल्पने लाघवात् । नच संयोगवत्त्वप्रकारकं प्रमाविषयत्वा(द्य)भावे द्रव्यत्वाद्यभावत्वं भेदरायोगिभेदादौ वा संयोगाभावत्वं कल्प्यते इत्यत्र विनिगमकाभाव इति वाच्यम् । तादृशाभावानां समनियतत्वयाऽभेदात् । एवंच द्रव्यवृत्तिसंयोगाभावगुणवृत्तिसंयोगाभावयोर्भेदः सप्रमाण एव । अथैवं द्रव्यत्वाभावादीनामप्यानन्त्यापत्तिः ।

कृष्णंभट्टीयं ।

दीधितिकारोक्तं मानाभावं खण्डयति—इदंत्विति । धर्मिणा अधिकरणभेदेन भिन्नत्वाभावादीनां । विनीति । विनिगमनाविरहेण संयोगाभावत्वधर्मिणोऽप्यनन्ताधिकरणवृत्तितयाऽतिरिक्तस्यावश्यकम् । विनिगमनाविरहेण सिद्धं चेदुभयमेव सिध्यतीति न्यायात् । तथाच मानाभावनिराकरणमात्रमिदम् । नत्वन्याद्युद्धारकतया द्रव्यवृत्तिसंयोगाभावादन्यस्य तस्य गुणादौ विनिगमनाविरहेण सिद्धस्यादिति । [ एतेन भिन्नत्व एव मानाभाव इत्यर्थमनालोच्योक्तम् ] ।

[ अथ तृतीयलक्षणम् । ] साध्यवप्रतियोगितेति मूलम् । अथोपदन्ताव्याप्यवृत्तिसाध्यके साध्यवद्घटादिभेदमादायाव्याप्त्यवारणात् संगतिः । नच सर्वकिंचिन्मात्याप्यवद्यत्किभेदनिवेशात्तत्र लक्षणसमन्वय इति वाच्यम् । तथासति व्यासज्यवृत्तिधर्मावच्छिन्नत्वरूपप्रतियोगिताविशेष-

न्यायरत्नं ।

ईश्वरे नित्यसुखाङ्गीकारे नित्यज्ञानत्वाभावे साध्ये गुणं व्यभिचारीति सत्ताभावसाध्यकस्थलान्तरानुसरणम् । इति द्वितीयलक्षणम् ।

[ अथ तृतीयलक्षणम् । ] दीधितौ कर्मादाविति । गुणादाविति

---

१ अव्याप्तिरप्युद्धर्तुम् इ. मै. पा. २ []एतचिन्हान्तर्गत मै. पु. मध्ये अधिक दृश्यते.

हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह—सक-लेति। साकल्यं साध्याभाववति साध्ये च बोध्यम्।

---

(अथ चतुर्थलक्षणं) हेतोरिति। नानाधिकरणकस्येत्यादिः। अव्याप्तेरिति। एतद्रूपवान् एतद्रसादित्यादौ। एतद्रसाधिकरणे एतद्रूपाधिकरणस्य द्वित्वादिनाभेदसत्त्वेपि व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन साध्यवन्निष्ठप्रतियोगितायाः प्रतियोग्यवृत्तित्वेन वा भेदस्य विशेषितत्वेन लक्षणगमनसम्भवाभासम्भवो दर्शितः।

साकल्यमिति। बोध्यमित्यस्य विशेषणमित्यादिः। अत्र सा-

कृष्णभट्टीय।

स्वनिरूपितस्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रतियोगिताविशिष्टान्यस्य मर्थं। न च वह्निमद्भेदस्य स्वाभावरूपप्रतियोगिवृत्तित्वं साध्यतावच्छेदकप्रतियोगितोपादानात्। भेदोपक्रान्ताव्याप्यवृत्तिसाध्यकाव्याप्तिनिरासाच्चेद् समञ्जसमिति वाच्यम्। एतत्कपिसंयोगवान्नेतरत्वादित्यादौ प्रतियोगित्वादिविशेषणस्यावेन लक्षणसङ्गतेः। कपिसंयोगी एतत्त्वादित्यादौ कपिसंयोगवद्वृत्तौ भेदमादायाव्याप्तावप्यव्याप्यवृत्तिसाध्यकसद्धेतुस्थलावच्छेदेनाव्याप्तिवारणासम्भवात्। [इति तृतीयलक्षणम्।]

[अथ चतुर्थलक्षणम्।] दीधितौ साध्येचेति। ननु महानसीयवह्न्यादेरपि वह्न्यन्तरमादाय साकल्यस्यासत्त्वादभावमादायाव्याप्तिः। स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साकल्यस्य साध्याभाववत्त्वाविशेषे तु यावदभावच्छिन्नाभावमादायाव्याप्तिः। न च साकल्योपादानात्साध्यतावच्छेदकव्यापकतावच्छेदकस्वप्रतियोगिताकत्वमर्थः। तेन प्रतियोगितायाः स्वरूपसम्बन्धरूपत्वेऽपि न वह्न्यायभावासंग्रह इति वाच्यम्। तथा सत्येकव्यक्तिक साध्यनि-

र्व्यावर्त्यं।

अत्रेदं चिन्त्यम्। प्रतियोगितासंसर्गककपिसंयोगत्वावच्छिन्नप्रकारकप्रमा प्रतिगुणविधया स्वविषयकलौकिकप्रत्यक्षं प्रति विषयविधया च कपिसंयोगत्वावच्छिन्नाभावस्य तादात्म्यसम्बन्धेन कारणत्वे कल्पनीयकारणतावच्छेदकत्वं यदि कपिसंयोगाभावत्वस्य तदा गौरवं स्यादिति कपिसंयोगाभावनिष्ठतद्व्यक्तित्वमेव कारणतावच्छेदकं वाच्यम्। तथा चाधिकरणभेदेनाभावभेदे तद्व्यक्तित्वस्य कारणतावच्छेदकत्वं न सम्भवतीत्यधिकरणभेदेऽप्यभावाभेद एव स्वीकर्तुमुचित इति। [इति तृतीयलक्षणम्।]

---

१ एतदारभ्य दीधितावित्यन्तं नै पु. ना.

कृष्णंभट्टीयं ।

ननु साध्ये साकल्यस्य मुख्यप्रयोजनमायास्यत्येव । एतद्रूपगगनोभयवानेतत्त्वादित्यादिसाध्ये प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्ध्या एतद्रूपगगनोभयाभावस्य लक्षणघटकतया एतद्रूपाभावमादायातिव्याप्तेर्विपक्षे साकल्यदानेनावारणात्[१] साध्ये साकल्यविशेषणेनैव वारणात् । तस्य सकलसाध्यप्रतियोगिकत्वात् । एतद्रूपगगनोभयाभावस्य प्रतियोगिवैयधिकरण्याभावात् । नच प्रतियोगिवैयधिकरण्यघटकप्रतियोगितावच्छेदकवैशिष्ट्यस्य साध्यतावच्छेदकताघटकसंबन्धेन निवेशनीयतया पर्याप्तिसंबन्धेनैतद्रूपत्वविशिष्टासंभवादेतद्रूपाभावस्य लक्षणाघटकतया साध्ये साकल्यविशेषणासत्त्वेऽपि न क्षतिरिति वाच्यम् । तथाप्येतद्रूपरसोभयाभावमादायातिव्याप्तेर्दुर्वारत्वात् । नचैवमपि एतद्रूपगगनान्यतराभावमादायातिव्याप्तिर्दुर्वारैवेति वाच्यम् । अन्यतरत्वस्य प्रत्येकधर्मत्वेन तदवच्छिन्नाभावस्य सकलसाध्यनिष्ठप्रतियोगिताकत्वाभावात् । तस्यैतद्रूपाभावसमनियतत्वेन तत्र लाघवेनैतद्रूपत्वस्यैव प्रतियोगितावच्छेदकत्वोपगमाच्च । नच साध्ये साकल्यानुपादानेऽपि तत्तैतद्रूपवद्वृत्तित्वावच्छिन्नाभावं तद्धटावृत्तित्वावच्छिन्नाभावं चादाय नातिव्याप्तिरिति वाच्यम् । एतद्रूपप्रतियोगित्वविशिष्टसमवायसंबन्धेन एतद्रूपगगनोभयसाध्यके एतद्रूपाभावस्यैव तादृशसंबन्धेन प्रतियोग्यधिकरणतया तमादायातिव्याप्तिवारणाय तदावश्यकत्वात् । विशेषणतया संसर्गत्वानुपगमेऽपि रसगगनोभयवान्घटत्वादित्यादौ, शुद्धसमवायेन साध्यतायां इतरातिव्याप्तिवारकत्वेन विनापि साध्याभाववति साकल्यं तद्विशेषणस्यावश्यकत्वात् । साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्योक्तावपि सत्तान्यसमवेतोभयाभावमादायातिव्याप्तिस्तस्यैव । वह्निधूमोभयाभावनदेतदभावस्य सर्वत्रसत्त्वात् । एवं द्रव्यत्वगगनोभयवान्सत्त्वादित्यादौ समवायेनैव साध्यत्वे साधनत्वे च द्रव्यत्वरूपाद्योभयाभावमादायातिव्याप्तिर्द्रष्टव्या । एवं घटत्वप्रकारकप्रमाविशेष्यत्वीयस्वरूपसंबन्धेन घटत्वप्रकारकप्रमाविशेष्यत्वघटावृत्तिधर्मतदुभयसाध्यघटत्वादावतिव्याप्तिवारणमपि साध्ये साकल्यस्य मुख्यप्रयोजनं । तथासति तत्रैतद्घटावृत्तित्वावच्छिन्नाभावादेर्लक्षणाघटकतया साध्यतावच्छेदकावच्छिन्नाभावस्य प्रतियोग्यधिकरणत्वाभावेन नातिव्याप्तिरिति चेत् । साध्ये साकल्यदानेऽपि गगनघटितोभयादिसाध्यके एतद्रूपवद्व्यावृत्तित्वावच्छिन्नाभावस्य तद्घटावृत्तित्वावच्छिन्नाभावादेश्च घटत्वप्रकारकप्रमाविशेष्यत्वघटावृत्तिधर्मतदुभयसाध्यके साध्यतावच्छेदकसंबन्धेन प्रमेयसामान्याभावस्यैव सकलसाध्यनिष्ठप्रतियोगिताकतया तादृशाभावमादायातिव्याप्तिर्दुर्वारैवेति, अव्याप्तिवारणस्यैव मुख्यप्रयोजनत्वात् ।

---

१ निरहात्. क. मै. पा. २ तदन्य. ३ साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्ये प्रमेयेतु तादृशावृत्तित्वविशिष्टोभयत्वावच्छिन्नाभावो बोध्यः । गुरुधर्मस्य साध्यतावच्छेदकत्वात् क. मै. पु. अ.

अव्याप्तिवारणाय साध्याभावे साकल्यविशेषणे धूमवान्वह्नेरित्यादौ साध्यतावच्छेदकीभूतसंयोगसंबन्धावच्छिन्नप्रतियोगिताकसकलसाध्याभावाधिकरणं गुणादिरेव स्यात् । अयोगोलकादेर्ह्रदासंयुक्तत्वावच्छिन्नाभावाधिकरणत्वादित्यतिव्याप्तिः । वह्निमत्त्वप्रकारकप्रमाविषयो धूमादित्यादौ साध्यतावच्छेदकीभूतस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावस्य तत्तद्विपक्षमात्रवृत्तितया सकलसाध्याभावाधिकरणाप्रसिद्ध्या अव्याप्तिश्चेति तदुपेक्ष्य साध्ये साकल्यविशेषणं निवेशितम् । ननु साध्ये साकल्यविशेषणदानेऽपि वह्निमान्धूमादित्यादावव्याप्तितादवस्थ्यम् । पर्वतादावपि पर्वतीयवह्नेर्ह्रदीयवह्निनाऽभाववत्त्वेन सकलसाध्याभावसत्त्वात् । व्या-

कृष्णंभट्टीयं ।

प्तेर्दुर्वारत्वादिति भावः । जगदीशेन तु साध्यविपक्षयोः साकल्याऽसत्त्वेऽपि साध्याभावे साकल्यादातिव्याप्तिरित्युक्तम् । तत्साध्यतावच्छेदकसंबन्धावच्छिन्नाभावप्रवेशो न संगच्छत इत्यतोऽव्याप्तिरित्युक्तम् । अव्याप्तिश्चेति । अत्र तत्तद्विपक्षावृत्तित्वादिरूपेण साध्याभावप्रसादाऽसंभव. । गगनभिन्नं घटत्वादित्यादावपि तत्तद्विपक्षावृत्तित्वावच्छिन्नाभावमादायैवाव्याप्तेः संभवादिति न साधु । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावनिवेशादिति सूचितम् । नच भवन्मते प्रतियोगितायां साध्यावच्छेदकसंबन्धानिवेशात्प्रमाणसाध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यस्यैव प्रवेशे स्वरूपसंबन्धेन तत्तद्गुणावृत्तीनां स्वरूपसंबन्धेनाभावघटितकूटाधिकरणाप्रसिद्धेर्जगदीशीयाऽतिव्याप्त्युद्धारः मथुरानाथीयोऽसंभवश्च संगच्छत एवेति वाच्यम् । कल्पद्वयमभिकृत्याव्याप्तेरेवाभ्याभिरभिधानाद्धृदादिनेति

भावरत्नं ।

नन्वेतद्रूपगगनोभयवानेतद्रसादित्यादौ साध्ये साकल्यविशेषणनिवेशस्य वास्तवप्रयोजन संभवति । तथाहि साध्ये साकल्यानिवेशे प्रतियोगिव्यधिकरणैतद्रूपत्वावच्छिन्नाभावमादायातिव्याप्तिः साध्याभाववति साकल्यविशेषणेऽपि दुर्घटा । तन्निवेशे च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणस्य सकलसाध्याभावाप्रसिद्ध्यैव नातिव्याप्तिरिति चेन । साध्ये साकल्यविशेषणदानेऽप्येतद्रूपगगनान्यतरत्वावच्छिन्नाभावमादायातिव्याप्तेर्दुर्वारतया साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यस्य हेतौ स्वतन्त्रविवक्षयाऽन्यथैव वा तत्रातिव्याप्तेर्वारणीयत्वात्तत्प्रयोजनस्य वास्तवत्वविरहात् । किंच निरुक्तसाध्यके एतद्रसवद्वृत्तित्वावच्छिन्नाभावस्यापि साध्ये साकल्यविशेषणादाने लक्षणघटकतया साध्याभाववति साकल्यदानेना-

साध्याभावो वा, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः । तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः ।

---

धर्मस्तदनवच्छिन्नप्रतियोगिताकत्वनिवेशनेव लाघवात् । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्यैवाभावे निवेशनमुचितम् । किं साध्ये साकल्यविशेषणेनेत्यभिप्रेत्य तथैवाह—साध्यतावच्छेदकेति । साध्याभाववति साकल्यविशेषणप्रयोजनमाह—विपक्षेति । वैकल्पिकयोः साध्यतदभावयोः साकल्यसाध्यतावच्छेदकावच्छिन्नप्रति-

कृष्णंभट्टीयं ।

च्छेदकत्वे तु वह्नित्वप्रकारकप्रमाविशेष्यत्वाभावः सुलभो बोध्यः । लाघवादिति । अथ गुरुधर्मेण साध्यतास्थलानुरोधेन प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावस्य वाच्यतया कथं लाघवमिति चेन्न । व्यासज्यवृत्तित्वं विहाय साध्यतावच्छेदकपर्याप्तावच्छेदकताकत्वसामान्याभावप्रतियोगिताकत्वमेव निवेश्यम् । साध्यतावच्छेदकपर्याप्तविषयताश्रयव्यासज्यवृत्तिधर्मावच्छिन्नत्वसामान्याभावप्रतियोगिताकत्वनिवेशे तदपर्याप्तव्यासज्यवृत्तिधर्मनिष्ठावच्छेदकताघटितविशेषणनिवेशे च महागौरवात् । पृथक् साध्यतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकत्वविशेषणावश्यकत्वापत्त्या गौरवाच्च । एवं च गुरुधर्मेण साध्यतास्थलानुरोधेनापि पारिभाषिकं साध्यतावच्छेदकमेव निवेश्यम् । प्रमेयवह्निधूमोभयसाध्यके च वह्निधूमोभयाभाव एव लक्षणघटक । नैवं साध्ये साकल्यमनावश्यकम् । नच साध्यव्यापकतावच्छेदकताप्रतियोगितावच्छेदकयोरेव संबन्धावच्छिन्नत्वनिवेशात् कालिकसंबन्धेन वह्नित्वावच्छिन्नसाध्यके समवायेन वह्नित्वविशिष्टाभावसंग्रहसंभादिति वाच्यम् । सिद्धमथमिति न्यायेन साध्ये साकल्यस्यैवाभिधानात् । एवं च लाघवोक्तिसंगतिः । यत्संबन्धावच्छिन्नावच्छेदकत्वं सम्बन्धान्तनिष्ठप्रतियोगितांशे गृह्यते तेन संबन्धेन साध्यांशे साध्यतावच्छेदकं भासत इति नियमेन कालिकसंबन्धेन वह्नित्वविशिष्टाभावपरामर्शोत्तर वह्नित्वसमवायावच्छिन्नावच्छेदकताकविधेयताशाल्यनुमित्यापत्तेरिति । एतेन [ व्यासज्यवृत्तित्वनिवेशेन ] प्रमेयवह्निधूमोभयसाध्यकेऽतिरेव । किंच व्यासज्यवृत्तित्व गुरुधर्मस्यानवच्छेदकत्वमते, लाघवं तु तस्यावच्छेदकत्वमत

---

१ प्रतीय. ह मे पा. २ कालिकसंबन्धेन वह्नित्वावच्छिन्नसाध्यके समवायेन वह्नित्वावच्छिन्नाभाववारणाय ह. मे. पु अ. ३ प्रसाण श्रवि. मे, पा.
४ समग्र वाक्यमिदं मै. पु ना.

अव्याप्यवृत्तिसाध्यकाव्याप्यवृत्तिसद्धेतावव्याप्तेः । व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणायाभावद्वये प्रतियोगिवैयधिकरण्यं बोध्यम् ।

---

अत एवाव्याप्तिरेवोक्ता नासंभवः । अत्र च नानाव्यक्तिसाध्यकत्वं व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदककत्वम् । अत एव एत(द्व्यक्ति)वृक्षीयावद्धर्मवानेतत्त्वादित्यादौ नानाव्यक्तिसाध्यकेऽव्याप्तिविरहेऽपि न क्षतिः । अव्याप्यवृत्तीति । कपिसंयोगी एतद्वृक्षत्वादित्यादावित्यर्थः । अव्याप्तेर्वारणायेत्यन्वयः । व्यभिचारिणि चेति । एतद्वृक्षत्ववान्कपिसंयोगादित्यादावित्यर्थः । अभावद्वये साध्याभावे हेत्वभावे च । तथा चाव्याप्यवृत्तिसाध्यकाव्याप्यवृत्तिसद्धेतावव्याप्तेर्वारणाय साध्याभावे व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणाय हेत्वभावीयं ।

अन्यथा नानाधिकरणत्वलाभेऽपि, द्रव्यत्वसाध्यके सद्धेतावव्याप्त्यभावात् । साध्य एव नानात्वदाने शब्दवान् गगनत्वादित्यादौ, उभयत्रापि तद्दाने, सत्ता द्रव्यत्वपृथिवीत्वान्यतमवान्पृथिवीत्वादित्यादौ, तदभावसामान्यविच्छेदेनाव्यव्याघातः स्यादित्यत आह—व्यधिकरणद्वयेति । यत्किंचित्साध्यानधिकरणवृत्तित्वं साध्याधिकरणीभूतयत्किंचिदाश्रयवृत्तित्वं वा ; यदि व्यधिकरणद्वयवृत्तित्वं तदा शब्दवान् गगनत्वादित्यादौ नाव्याप्तिरत आह—एतद्वृक्षेति । नन्वेतद्दोषवारणाय व्यधिकरणद्वयवृत्तित्वं यत्किंचित्साध्यासमानाधिकरणवृत्तित्वमनुच्यते तदोक्तान्यतमसाध्यकपृथिवीजलान्यतरत्वादिहेतुक एवोद्देश्यतावच्छेदकद्वये विधेयसत्त्वाद्भूतलेति चेत्तदोक्तरीतिं परित्यज्य हेत्वधिकरणयत्किंचिदाश्रयवृत्तित्वरूपं साध्य एव नानात्वं निवेश्यम् । वस्तुतस्तु यत्किंचित्साध्यानधिकरणहेत्वधिकरणवृत्तिसाध्यवृत्तित्वमर्थ इति न कोऽपि दोषः । एतेन व्यधिकरणद्वयवृत्तित्वं चेद्यत्किंचित्साध्यानधिकरणवृत्तित्वं तदा द्रव्यत्वपृथिवीत्वसत्तान्यतमसाध्यकपृथिवीत्वादेः संग्रहापत्तिः । परस्परानधिकरणवृत्तित्वं परस्परानधिकरणवृत्तिपरस्परवृत्तित्वं चेत्तदा द्रव्यत्वपृथिवीत्वान्यतरवान्द्रव्यत्वादित्यादावव्याप्तिसंभवेन तदकथने न न्यूनतेति मन्तव्यम् ।

अत्रेदं बोध्यम् । नानाधिकरणसाध्यके इत्येव न्यायः । न चैवं सत्ता द्रव्यत्वपृथिवीत्वान्यतरवान्द्रव्यत्वादित्यादावव्याप्तिसत्त्वादसङ्गतिरिति वाच्यम् ।

---

१ पृथिवीकपिसंयोगात् इत्यादौ चेत्यर्थः इति का. पाठ.. २ यदि नानाव्यक्तित्वं. मै. पा. ३ वृत्तित्व इ. मै. पा. ४ यद्यतान् इ. मै. पा. ५ पृथिवीत्वाद्यन्यतरवान् इ. अधिक. पा.

हेत्वभावे प्रतियोगिवैयधिकरण्यमित्यर्थः। यद्यपि हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया कपिसंयोगी कपिविभागादित्याद्यव्याप्यवृत्तिहेतुकेऽप्यव्याप्तिवारणप्रयोजनकत्वं साध्याभावे तद्विशेषणस्य सम्भवतीति व्याप्यवृत्तीत्यकिञ्चित्करम्। तथापि हेत्वभावे तद्विशेषणप्रतिसन्धानं विनैव व्याप्यवृत्तिहेतुकस्थलेऽव्याप्तिनिर्णयो भवतीत्येतदभिसन्धायैव तदुक्तम्। प्रतियोगिवैयधिकरण्यं च न प्रतियोग्यधिकरणावृत्तित्वं। अव्याप्यवृत्तिसाध्यके तथाविधहेतुके च तादृशसाध्याभावहेत्वभावाप्रसिद्ध्याऽव्याप्तेः। अपितु प्रतियोग्यनधिकरणवृत्तित्वं। तथाच प्रतियोग्यनधिकरणवृत्तिर्यद्विशिष्टसाध्याभावाधिकरणेषु यावत्सु प्रतियोग्यनधिकरणवृत्तिरनविशिष्ट सम्बन्धेन वर्तते योऽभावस्तत्प्रतियोगित्वमर्थः। तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगाद्यनधिकरणगुणादिवृत्तित्वोपलक्षितकपिसंयोगाद्यभावस्य हेत्वधिकरणे सत्त्वेऽपि नाव्याप्तिः। तथा एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ तथाविधकपिसंयोगाद्यभावस्य हेत्वधि-

कृष्णभट्टीय।

तदधिकरणवृत्तित्वविशिष्टसाध्याभावप्रसिद्ध्याऽव्याप्तेः। एतेन पाश्चात्यव्याप्यव्यापकभावावगाहित्वं साध्यविशेषणमपि प्रयुक्तं। रूपवान् पृथिवीत्वादित्यादौ यत्सत्त्वे रूपव्यक्त्यनधिकरणवृत्त्यभावेऽपि नानाधिकरणवृत्तिता-वच्छेदकसाध्यताव-च्छेदकस्थले इत्यव्याप्तिः। इत्थं पृथिवीत्वादित्यादौ च विशिष्टसत्तादिमादायाव्याप्तिसम्भवाच्च छेदेन व्यवच्छेदात् इति।

एतद्वृक्षत्ववानिति। एतत्प्रयोजनं चिन्त्यम्। वृक्षवृत्त्येतत्त्व वा सा-ध्यतावच्छेदकम्। अत्र निरुक्ताधिकरणतानिवेशो गौरवम्। एवञ्च विशिष्टसत्ताया नानाधिकरणे साध्याव्याप्यवृत्तिव्यभिचारिण्यतिव्याप्तेरभेद्यत्वात् आह—प्रतियोगीति। ननु [स्व]प्रतियोगित्वेन साध्योपादाने व्यर्थं साध्यानधिकरणत्वनिवेशे तु साध्याभावाधिकरणत्वं व्यर्थमिति चेन्न। इदानीं मूलानुरोधेन साध्याभावाधिकरणतायां स्वनिरूपकाभावीयत्व स्वावच्छेदकावच्छि

न्यायरत्न।

रूपघटोभयाभावस्य प्रतियोगिव्यधिकरणस्य समवायेनैवाव्याप्तिरिति चेन्न। घटत्वस्यैव तादृशाभावप्रतियोगिताव-च्छेदकत्वसम्भवात् तादृशोभयत्वावच्छिन्नप्रतियोगिताकाभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकत्वासम्भवादिप्रसिद्धाव्याप्तेर्नावकाशात्।

१ साध्याभावाधिकरणे इति का पाठ २ साध्य इ मै पा ३ नावे तदा इ मै का

करणे सत्वेऽप्यतिव्याप्तिः । प्रतियोग्यनधिकरणीभूतसाध्याभावाधिकरणयावन्निष्ठस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वमिति फलितोऽर्थः । प्रथमे साध्यतावच्छेदकसंबन्धेन चरमे हेतुतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम् । तेनायमात्मा आत्ममहाकालान्यतरत्वादित्यादौ व्यभिचारनिरूपकाधिकरणस्य कालस्य कालिकसंबन्धेन साध्याधिकरणत्वेऽपि नातिव्याप्तिः । तथा वह्निमान्धूमादित्यादौ साध्याभावाधिकरणयावदन्तर्गतकालज्ञानादिषु कालि-

कृष्णंभट्टीयं ।

ध्वसामानाधिकरण्य–उभयसंबन्धेन प्रतियोगितावैशिष्ट्यान्यत्वस्याभिप्रेतत्वेन घटाभावादिवारणाय साध्याभावनिवेशस्यावश्यकत्वात् । पश्चात्तु प्रकृतसाध्यानधिकरणत्वस्य स्वयमभिधानीयत्वादिति । यद्वा साध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणेत्यभावाधिकरणानन्तरार्थः । साध्याभावनिष्ठप्रतियोग्यनधिकरणवृत्तितानिरूपकं यद्यावत्तन्निष्ठस्वप्रतियोग्यनधिकरणवृत्तितानिरूपकताकाभावप्रतियोगित्वोक्तावगौरवमेव द्रष्टव्यम् । आत्मेति । नच साध्ये साकल्याप्रसिद्धिः । ज्ञानस्यैव साध्यत्वात् । [ [6]एवं सर्वस्यापि विषयितासंबन्धेन ज्ञानवत्त्वाददोषः । जन्यज्ञानविशेषस्यैव साध्यत्वात् ] एवंच जन्यज्ञानरूपप्रतियोग्यनधिकरणे महाप्रलये कालात्मान्यतरत्वरूपहेतोः सत्त्वेनातिप्रसङ्गो नास्तीति । महेति । एतेनात्मत्वे साध्ये संबन्धसामान्येन प्रतियोग्यनधिकरणं गगनादिकमेव स्यात्तु महाप्रलयः । तथापि कालिकसंबन्धेनात्मत्वसत्त्वात् । तत्र च हेत्वभावात्सर्वं नातिप्रसङ्ग-

न्यायरत्नं ।

यद्वा साध्यवद्भिन्नवृत्तितावच्छेदकधर्मानवच्छिन्नत्वाभावस्य साध्यनिष्ठप्रतियोगितायां निवेशे तत्र लक्षणसमन्वयसंभवादित्यभिप्रायः । साध्याभावाधिकरणयावन्निष्ठस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वमिति फलितार्थ इति । यद्यप्युक्तफलितार्थे हेत्वभावे सकलसाध्याभाववन्निष्ठत्वविशेषणाप्रवेशान्निर्धूमत्वव्याप्यवान्निर्वह्नित्वादित्यादौ दीधितिकृता वक्ष्यमाणा व्याप्त्यसङ्गतिः । तथापि यथाश्रुताभिप्रायेण स्वप्रतियोग्यनधिकरणसाध्याभाववत्साध्याभाववन्निष्ठाभावप्रतियोगित्वमिति किञ्चित्परिष्काराभिप्रायेण वा वक्ष्यमाणाव्याप्तिः सङ्गमनीया । आत्ममहाकालेति । अत्र महत्पदानुपादाने धूम-

१ आत्मत्वाधिकरणत्वेऽपि इति का. पाठः. २ यथाश्रुतस्यैव वा मै. पु. गधिकम्. ३ करणत्वं इ. मै. पा. ४ धानीयम. इ. मै. पा. ५ वस्तुतस्तु. मै. पा. ६ मै. पु. म.

रणे बोध्यः । तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम् । तेन द्रव्यत्वादौ साध्ये विशिष्टसत्त्वादौ नाव्याप्तिः । न वा विशिष्टसत्त्वात्वादिना तादृशाभावप्रतियोगिनि सत्त्वादावतिप्रसङ्गः ।

---

भावपदोपादाने चाक्षराधिक्यमिति वक्ष्योक्तम् । तत्प्रतियोगित्वं साध्याभावनिष्ठाभावप्रतियोगित्वम् ॥ हेतुतावच्छेदकरूपेण हेतुतावच्छेदकावच्छिन्नमित्यर्थः । हेत्वभावनिष्ठप्रतियोगिवैयधिकरण्य-(शरीरे)स्वप्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशनस्य प्रयोजनमाह —द्रव्यत्वादाविति । विशिष्टेति । गुणकर्मान्यत्वविशिष्टसत्तेत्यर्थः । प्रतियोगितायां (हेत्वभावप्रतियोगितायां) । हेतुतावच्छेदकावच्छिन्नत्वनिवेशनस्य फलमाह—नवेति । अत्रापि द्रव्यत्वादौ साध्ये इत्यनुषज्यते । विशिष्टसत्त्वात्वादिना गुणकर्मान्यत्वविशिष्टसत्तात्वादिना । तृतीयार्थश्च अवच्छिन्नप्रतियोगिताकत्वं तस्य चाभावेऽन्वयः । प्रतियोगिपदार्थैकदेशप्रतियोगितान्वितमवच्छिन्नत्वं वा तदर्थः । तादृशाभावेति । सकलसाध्याभाववन्निष्ठाभावेत्यर्थः । नच हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यनिवेशस्थले हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यमेव निवेश्यताम् । ततोऽपि तत्प्रयोजननिर्वाहात् । तथाच द्रव्यं सत्त्वादित्यादौ गुणादिनिष्ठविशिष्टसत्ताभावस्य हेतुतावच्छेदकावच्छिन्नसमानाधिकरणतयैवातिव्याप्तिवारणसंभवात्प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशनमफलमिति वाच्यम् । हेत्वभावे हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठाया हेतुतावच्छेद-

दुर्गाभट्टीयं ।

भत्वं वा द्रव्यत्वं तेन न साध्ये साकल्याप्रसिद्धिः । अवच्छिन्नेति । अस्य प्रकारतया भानात् वह्निरेव नास्तीति न प्रत्ययः । हेयप्रतियोगित्वभानासहिष्णुराह—प्रतियोगीति । सकलेति । सकलतन्निष्ठहेतुतावच्छेदकावच्छिन्नानधिकरणताकाभावप्रतियोगित्वं तु बहुव्रीह्यर्थसंबन्धासंभवान्नोक्तम् । सकलेति । यत्स्थले तादृशपरिष्कारे निर्धूमत्वव्याप्यवान्निर्वह्निरित्यादित्या दावव्याप्तिर्दानासङ्गतिरिति सकलसाध्याभाववन्निष्ठहेतुतावच्छेदकावच्छिन्नप्रतियो-

धावच्छिन्नानधिकरणवृत्तित्वविशिष्टनिरूपिताधिकरणता तन्निरूप-
धाभाव(प्रतियोगित्व)वत्त्वमर्थः स्यात्तदपेक्षया सकलसाध्याभावव-
न्निष्ठा या हेतुतावच्छेदकावच्छिन्ना यादृशप्रतियोगितावच्छेदकाव-
च्छिन्नानधिकरणता तद्धर्मरूपास्मदीयफलितार्थस्य लघुत्वात् । नच
ममापि सकलसाध्याभाववन्निष्ठं यद्धर्मावच्छिन्नानधिकरणत्वं तद्धर्म-
वत्त्वमित्येवार्थः । स चातिलघुरेवेति वाच्यम् । एतादृशार्थकरणे
मूलोक्तं प्रतियोगितायां व्याप्तित्वं व्याहन्येतेति मूलानुसारेण दीधि-
तिकृता गुर्वर्थानुसरणात् । उक्तविशेष्यविशेषणभावेन निवेशे
व्यर्थविशेषणतानवकाशात् । केचित्तु हेतुतावच्छेदकावच्छिन्नवैयधिक-
रण्यनिवेशे सकलसाध्याभाववन्निष्ठविशिष्टसत्तात्वावच्छिन्नव्यधिकर-
णाभावप्रतियोगित्वरूपव्याप्तिविशिष्टवैशिष्ट्यज्ञानस्य गुणेऽपि सत्वात्
बाधानवतारदशायां तत्र द्रव्यत्वानुमित्यापत्तिः । अस्मन्मते तु तत्प्र-
तियोगित्वं चेद्यतो ऽन्यस्य तादृशप्रतियोगितावच्छेदकहेतुतावच्छेद-
कस्य व्याप्तितया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानस्य गुणेऽपि भ्रम-
त्वादित्याहुः ।

यत्रैकव्यक्तिकं साध्यं विपक्षो वा, तत्र निर्धूमत्वव्याप्ये,

---

[अथ चतुर्थलक्षणदूषणम्] । एतल्लक्षणं दूषयित्वा उत्तरलक्षणमवतारयति—यत्रैकव्यक्तिकमिति । यत्रैकव्यक्तिकं साध्यं तत्राव्याप्तिरित्यन्वयः । एतद्रूपवानेतद्धसादित्यादौ अव्याप्तिरित्यर्थः । अनेकाशेषत्वरूपसाकल्यस्य साध्येऽसत्त्वादिति भावः । साध्ये साकल्यविशेषणं परित्यज्य कल्पान्तरानुसरणान्न तद्दोषावकाश इत्यत आह—विपक्षो वेति । विपक्षः साध्याभाववान् । अत्राप्येकव्यक्तिक इत्यस्य विपरिणतस्यानुषङ्गः । तथाचैतद्घटभिन्नं पटत्वादित्यादौ साध्याभाववत्येतद्घटादौ साकल्याप्रसिध्याऽव्याप्तिरित्यर्थः । सकलपदस्याशेषमानपरत्वे दोषान्तरमाह—निर्धूमत्वव्याप्य इति । तद्धेन निर्धूमत्वव्याप्यत्वेन । तथाच धूमत्वावच्छिन्नाभावव्याप्यवान् वह्नित्वावच्छिन्नाभावादित्यादावित्यर्थः । निर्धूमत्वावच्छिन्ने साध्ये एक-

दूषणमहीयं ।

धिकरणधान्दजन्यबोधे तादृशबोधे च विषयः यद्धर्मावच्छिन्नानधिकरणशब्दजन्यबोधे च यद्धर्मवत्त्वेन विशिष्टहेतुतावच्छेदकस्थले तस्योपादेयतया साध्यत्वादिना न निषय इत्याशयेन विशिष्टविशिष्टहेतुकस्थले विशेष्यविशेषणभावयोर्थोऽभिसन्धिः ।

[अथ चतुर्थलक्षणदोषः] अनेकाशेषत्वं स्वसमानाधिकरणयावद्धर्मसमानाधिकरणानेकसाध्यवृत्तिसाध्यतावच्छेदकवत्त्वं । निर्धूमत्वव्याप्यत्वं धूमवद्वृत्तित्वं । साहचर्यसंबन्ध. साध्यतावच्छेदक· अन्यथा व्यभिचारत्वं ।

व्याप्तित्वे व्याप्तेर्विशिष्टकार्थरूपतानुपपत्तिरतः सकलसाध्याभाववन्निष्ठस्वावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टनिरूपिताधिकरणताविरहकाभावीयहेतुतावच्छेदकावच्छिन्नप्रतियोगित्वं व्याप्तिरित्येव वक्तव्यं । तथाच हेतुतावच्छेदकावच्छिन्नाधिकरणनिवेशानुयोगी दुर्वार एवेति प्रतिभाति । तथापि सकलसाध्याभाववन्निष्ठभेदप्रतियोगितावच्छेदकावच्छेदकहेतुतावच्छेदकावच्छिन्नलनिष्ठप्रतियोगित्वरूपकल्पितार्थे तात्पर्यान्नानुपपत्तिरित्यवधेयम् ।

[अथ चतुर्थलक्षणदोषः ।] अनेकाशेषत्वरूपसाकल्यस्येति । अनानेकत्वं व्यासज्यवृत्तिधर्मपर्याप्त्यधिकरणत्वम् । व्यासज्यवृत्तित्वं चैकत्व-

---

१ तत्र दोषा इति का. पाठः. २ तैन्नङ्ग्य इति मै. पाठः. ३ शब्दस्य इति का. पाठः.
गदा. प. ८

तत्वेन साध्ये, निर्वह्नित्वादौ चाव्याप्तिः । तत्र हेत्वभावस्य य-ह्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह—साध्यवदिति।

---

व्यस्तिकतया पूर्वदोषाक्रान्तत्वेन तद्व्याप्यसाध्यकानुसरणं । निर्धूम-त्वव्याप्यस्य ह्रदादेस्तादृप्येण साध्यताया सद्धेतुत्वानुपपत्तिरतस्तत्वे-नेत्युक्तम्। हेत्वभावस्येति । अथ बहुत्वात्मकहेत्वभावस्य प्रत्येकं सकलसाध्याभाववन्निष्ठत्वासम्भवेऽपि सकलतन्निष्ठवह्न्यभावादिभेदप्र-तियोगितामादायैव लक्षणं सगमनीयम्। हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशादेव व्यभिचारिणि सम्बन्धान्तरावच्छि-न्नप्रतियोगिताकहेत्वभावमादायातिप्रसङ्गानवकाशेन हेत्वभावप्रति-योगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशात् ।

यत्तु वह्निमद्भेदहेतुकाभिप्रायकोऽयं ग्रन्थः । भेदभेदस्यानवस्थाभ-येनाधिकरणस्वरूपस्य स्वीकरणीयतया तथा तस्य च प्रत्येकं विश्रान्त-तया यावद्विपक्षवृत्तित्वसम्भवात्तत्र हेतुभेदमादायापि लक्षणगमनास-म्भवादिति । तन्न । आकाशाभावाधिकरणकभेदभेदस्याकाशाद्यभावा-धिकरणस्वरूपतया तस्य च यावद्विपक्षवृत्तित्वेन तमादायैव लक्षणगमनसम्भवात्। नचैतादृशरीत्या आकाशाभावमादाय भेदहेतु-कव्यभिचारिण्यतिव्याप्तिप्रसक्त्या हेत्वभावत्वेन सकलसाध्याभावा-धिकरणवृत्तित्वं विवक्षणीयम्। तथासति अधिकरणस्वरूपाभावस्य स्वस्मिन्नेव तदभावत्वेन वृत्तिरिति नातिव्याप्त्यवकाशः । एवञ्चाका-

कृष्णभट्टीय ।

चारित्वापत्ति । व्यभिचारिणि आत्मभिन्न द्रव्य वादित्वादौ । भेदहेतु-केति । गुणवान्घटभेदादित्यादौ । स्वस्मिन्नेवेति । घटभेदादिरूपहेतुभेदत्वेन

न्यायरत्न ।

यथा-यदवच्छेदकधर्मावच्छिन्नपर्याप्तिकस्वरूपभेदत्वविरुद्धत्व स्वसमानाधिकरण-भेदप्रतियोगितावच्छेदकतादात्म्यैतदुभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्व चेत्त-न्यदेतत् । अवृत्तत्व च समभिव्याहृतपदार्थतावच्छेदकधर्मव्यापकीभूतो योऽन्यत्वव्यासज्यवृत्तित्वमभिन्नो भयस्वपर्याप्त्यधिकरणत्व बोध्यम्। भेद-हेतुकेति । गुणवान्घटभेदादित्यादावित्यर्थः । स्वस्मिन्नेवेति । घटभेदह

---

१ नञ्ज्कादे इति का पाठ २ स्वरूपस्य स्वीकरणीयतयेति ये पुस्तके अधि-कम् ३ आकाशाभावाभावरूप इ मे पा

शाभावमादाय नोक्ताव्याप्तिपरिहारसंभव इति वाच्यम् । उक्तस्थले आकाशाभावस्य हेतुतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यविरहादेवातिव्याप्तिवारणसंभवेन तादृशविवक्षायाः निष्प्रयोजनत्वात् । वह्निमद्भेदहेतुकस्थले च साध्याभावाधिकरणस्य हेतुरूपप्रतियोग्यनधिकरणत्वेनाकाशाभावरूपहेतुभेदस्य प्रतियोगिव्यधिकरणत्वेनाव्याप्तिवारणसंभवादिति ।

अत्र केचित् । यत्र वह्न्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यं साध्यं वह्न्यभावान्यत्वविशिष्टवह्न्यभावो हेतुः । तत्र वह्न्यभावस्यापि सकलसाध्याभावान्तर्गततया तत्र वह्न्यभावभेदासत्त्वेन तमादाय लक्षणगमनासंभवात् । न च तादृशविशिष्टहेतुकस्थले हेतु( मत् )भेदस्य सकलसाध्याभाववन्निष्ठत्वासंभवेऽपि अखण्डस्य विशिष्टात्यन्ताभावस्य तथात्वमादायैव लक्षणं संगमनीयमिति वाच्यम् । प्राचीनमते विशिष्टाभावस्य विशेषणाभावविशेष्याभावाभ्यामनतिरिक्ततया तादृशविशिष्टाभावस्य वह्न्यभावत्वतद्धेतूभयरूपत्वेन सकलसाध्याभाववन्निष्ठत्वासंभवात् । अथैवमपि विषयितादिसंबन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावात्यन्ताभावस्याखण्डतया सकलधूमवन्निष्ठतया तमादायैव लक्षणं संगमनीयमिति चेन्न । वृत्त्यनियामकतया विषयितादिसंबन्धानां अत्यन्ताभावप्रतियोगितानवच्छेदकत्वात् । संयोगादिरूपव्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावा(त्यन्ता)भावस्याखण्डतया सकलधूमवन्निष्ठत्वेऽपि तदभावप्रतियोगिता न हेतुतावच्छेदकीभूतवह्न्य-

कृष्णंभट्टीय ।

गगनाभाव एव गगनाभावस्य वृत्तिमानित्यर्थः । यदि हेतुभेदत्वेन गगनाभावस्य केवलान्वयित्वं तदा घटभेदरूपहेतौ गगनाभावरूपहेतौ भेदसत्त्वेन घटभेदो न घटभेद इति प्रयोगापत्तिरित्यर्थः । हेत्वभावत्वेन हेतुतावच्छेदकावच्छिन्नयावत्प्रतियोगिताकाभावत्वेन । दीधितिकारोक्तस्थलेऽव्याप्त्युद्धारेऽप्यादिपदमाद्यस्थलेऽव्याप्तिरिति वदतां मतं दूषयन्ति ।

अत्र केचिदिति । अथैवमपीत्यादि । वह्न्यभावात्यन्ताभावस्येति । वह्न्यभावान्यत्वविशिष्टवह्न्यभावात्यन्ताभावस्येत्यर्थः । अखण्डतया । अतिरिक्ततया न तथा विशिष्टाभावः । वह्न्यादिघटकसंबन्धानव-

१ अखण्डस्य इति मं. पाठ.

भावत्वावच्छिन्ना । तत्र लाघवेनाभावत्वस्यैवावच्छेदकत्वादिति न तन्मादायापि लक्षणसङ्गतिः । नच गुरुधर्मावच्छिन्नहेतुकस्थले लक्षणसङ्गमनाय पारिभाषिकमेवावच्छेदकत्वं हेतुतावच्छेदके निवेश्यम् । तथाच वह्न्यभावत्वादेरपि तादृशावच्छेदकत्वमक्षतमेवेति वाच्यम् । एतल्लक्षणस्य परित्याज्यतया निखिलदोषोद्धारानावश्यकत्वेन पारिभाषिकमवच्छेदकत्वं न निविष्टमित्यभिप्रायेणैव तद्दोषप्रदानादिति वदन्ति ॥

कृष्णभट्टीय ।

च्छिन्नप्रतियोगिताकत्वात् । एवमुत्तरत्रापि । एतेनैव शङ्का न दीधितिकारोक्तस्थले परास्ता । तत्र वह्न्यभावभेदमादायैव लक्षणसमन्वयोक्तेः विवक्षितानुधावनवैयर्थ्यादित्यपास्तम् । पारिभाषिकमेवेति । यद्यपि प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वं न तत्र, द्रव्यं सत्त्वादित्यादौ सत्ताभावस्य विशिष्टसत्ताभावप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वादव्याप्तेः । एतेन हेतुतावच्छेदकसमानाधिकरणोऽप्रतियोगितानवच्छेदकधर्मानवच्छिन्नस्य परास्तम् । नापि तदवच्छिन्नाभाववद्वृत्तित्वविशिष्टसामान्यकत्वं । प्रकृतेऽभावस्वरूपतदवच्छिन्नाभावाप्रसिद्धेः । विपक्षनिष्ठाभावप्रतियोगिताघटकसम्बन्धेन तदवच्छिन्नाभावो न निवेशयितुं शक्यः । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकस्य केवलान्वयित्वाद्वह्न्यभावस्य तद्दोषस्य स्यात् । तथापि स्वविशिष्टसमभिव्याप्तिनिष्ठाभावप्रतियोगितानवच्छेदकताकत्वमेव तदवच्छेदकत्वं बोध्यम् । न चैव पक्षिमान्धूमादित्यादौ संयोगावच्छिन्नहेत्वभावप्रतियोगितावच्छेदकधूमत्वादि समवायावच्छिन्नसत्ताभावप्रतियोगितावच्छेदकत्वादव्याप्तिः । प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य वह्न्यभावे सत्त्वेऽप्यप्रसिद्धिरिति वाच्यम् । स्वविशिष्टाधिकरणस्य हेतुतावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणत्वेन विशेषणीयत्वादिति दिक् ॥ नन्वेवमपि हेत्वभावादेः प्रतियोगिवैयधिकरण्यस्य हेतुतावच्छेदकसम्बन्धेन निवेशाभावस्थलेऽव्याप्तिवारणमिति चेन्न । यादृशप्रतियोगिता यद्धर्मविशिष्टसन्निधिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्ना यद्धर्मावच्छिन्नाधिकरणवृत्त्यप्रतियोगिवैयधिकरण्यनिवेशात् । तथैव कर्मभिन्नसत्त्वादित्यादावतिव्याप्तिः साध्याभावसकलनिष्ठत्वे सम्बन्धविशेषावच्छिन्नत्वस्य निवेश्यत्वात्प्रतियोगितायाः पारिभाषिकं हेतुतावच्छेदकावच्छिन्नत्वं परित्यज्य, यद्धर्मे हेतुव्यापकतावच्छेदकत्वं वा निवेश्यम् । तेन कर्मान्यत्व

न्यायरत्न ।

यद्धेतुभेदत्वेन गमनाभाव एव गमनाभावस्य वृत्तिमत्तासिद्धर्थं । यदि च घटभेदभेदत्वेन गमनाभावस्य केवलान्वयित्वं तदा घटभेदो न घटभेद

१ अभावत्वस्य प्रतियोगितावच्छेदकतावच्छिन्नानतिरिक्तत्वात्प्रसिद्ध मे पु भ

तदसत् । तथासत्यपि सकलसाध्याभाववन्निष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावा(व)भावमादाय लक्षणसमन्वयसम्भवात्। नच जन्यमात्रस्य कालोपाधितानये साध्याभाववति (पर्वतादौ) कालिकसम्बन्धेन वह्न्यभावा(दि)सत्त्वात्तत्र तत्सम्बन्धेन तस्याभावो न वर्तत एवेति वाच्यम् । कालिकसम्बन्धेन तत्र वह्न्यभावस्य सत्त्वेऽपि प्रतियोग्यनधिकरणीभूतवह्निमद्देशावच्छेदेन तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्यापि सत्त्वात् । ( एवं विशिष्टाभावस्य विशेष्याभावविशेषणाभावाभ्यां अनतिरिक्तत्वे द्रव्य विशिष्टसत्त्वादिलादावेवाव्याप्तिसम्भवे तदुपेक्षायां निर्बीजत्वाच ) । एतेनै विशे-

कृष्णभट्टीय ।

विशिष्टसत्ताभावमादाय न दोष । तथा सत्यपीति । क्रियाप्रत्ययोरेव कालोपाधितापक्षे । सत्त्वादिति । नच कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावभेदविशिष्टवह्न्यभावाभावस्याखण्डत्वेऽपि लाघवेन वह्न्यभावत्वमेव तत्प्रतियोगितावच्छेदकं स्यादिति वाच्यम् । तत्प्रतियोगितानिरूपकाभावविरोधितावच्छेदकत्वस्य तादृशाभावाधिकरणनिरूपितप्रतियोगितावच्छेदकसम्बन्धावच्छिन्ननिरवच्छिन्नाधेयतानवच्छेदकत्वरूपस्य प्रतियोगितासमभैव स्वघटकतया, विशिष्टसत्तात्ववत् विशिष्टवह्न्यभावत्वस्य प्रतियोगितावच्छेदकत्वात् । [ तत्र सत्तात्वस्य तादृशाधेयतानवच्छेदकतया तदपेक्षया न गुरुत्वं विशिष्टसत्तात्वस्य । इह तु वह्न्यभावत्वस्यापि तादृशनिरवच्छिन्नाधेयतानवच्छेदकतया विशिष्टवह्न्यभावत्वस्य ततो गुरुत्वानपायादिति । नैवम् । तत्प्रतियोगिताश्रयवृत्तिषु विशिष्टानवच्छेदकावच्छिन्नाया अनवच्छेदकत्वस्य वाच्यत्वात् । एवं गुरुधर्मे वह्न्यभावभेदविशिष्टवह्न्यभावत्वे तत्र वह्न्यभावावच्छेदेन वह्निमद्द्रव्यत्वावच्छेदेन चाधेयतानवच्छेदत्वम् । वह्न्यभावस्य महाकालेऽपि तद्विशिष्टसत्तानवच्छेदकत्वात् । केवलवह्न्यभावत्वे तु वह्न्यभावत्वेन तथाविधमहाकालवृत्तितावच्छेदकत्वमेवेति विशेषात् । ] ननु तत्र वह्न्यभावभेदासत्त्वेनेति पूर्वग्रन्थे वह्न्यभावभेदविशिष्टवह्न्यभावभेदासत्त्वेनेति व्याख्यानं न युज्यते । गुरुतया तादृशवह्न्यभावत्वस्य भेदप्रतियोगि-

न्यायरत्न ।

इति प्रयोगापत्तिरिति ध्येयम् । कालिकसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावमादायेति । अत्र वह्न्यभावपदं वह्न्यभावान्यत्वविशिष्टवह्न्यभा-

---

१ वह्निमद्वृत्तित्वा इति का. पाठ २ तदुपेक्षायामसाध्याभाववृत्तित्वस्यानुधावने इति का पा ३ एतेनेत्यादि सत्त्वादित्यन्तम् का. पुस्तके न दृश्यते ४ लक्षणपरिष्कारे इति मै पाठ ५ अवेक्षरि. मै. पा. [ ] एतदन्तर्गतं का प्र ना.

न्ताभावमादाय तदसंभवो दर्शितरीत्यावसेयः । इत्थं च विशिष्टाभावस्य विशेष्याभावविशेषणाभावाभ्यामनतिरिक्तत्वेऽपि न दोषासंगतिरिति परास्तम् । तत्रापि कालिकसंबन्धावच्छिन्नाभावमादाय दोषवारणसंभवात् । तस्मात्प्रतियोगितावच्छेदकसंबन्धेनैव प्रतियोगिवैयधिकरण्यं निविष्टं । प्रतियोगिता च हेतुतावच्छेदकसंबन्धावच्छिन्नत्वेनैव निविष्टेत्यभिप्रायेणैव तदुपादानं । हेतुतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्योपादाने तु अग्रिमलक्षणापेक्षया गौरवमेवेति लक्षणान्तरावतारे बीजं बोध्यं । एतेन सकलशब्दस्य व्यापकत्वार्थकतया साध्याभावव्यापकीभूताभावप्रतियोगित्वमेव निष्कृष्टैतल्लक्षणार्थः । धूमवान्वह्नेरित्यादौ प्रमेयत्वादिना वह्न्यभावस्य साध्याभावव्यापकत्वे(पि) न क्षतिः । यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं साध्याभावव्यापकतावच्छेदकं तद्रूपत्वस्यैव लक्षणत्वात् । एवं च हेत्वभावे प्रतियोगिवैयधिकरण्यं

कृष्णभट्टीय ।

न्धेन वह्न्यभावरूपदेशो । दर्शितेति । हेत्वभावस्य सामानाधिकरण्येन पक्षिरूपस्य तत्सामानाधिकरण्यरूपत्वेन नानात्वात् । कालिकेति । एवं पर्यंतवृत्तिरूपध्वंसादौ कालिकसंबन्धेन हेतौ सत्येऽपि तदनधिकरणघटात्यन्ताभावावच्छेदेन तदभावोऽपि बोध्य । ननु साकल्य समभिव्याहृतपदार्थतावच्छेदकविशिष्टव्याप्तिनिरूपकत्व समभिव्याहृतपदार्थान्वयिसकलशब्दोत्तरवृत्तिशब्दोपमन्वानात् । साध्याभावाधिकरणावृत्तित्व[स्य]भावकत्वं निर्गलितार्थं । तत्र च वह्न्यभावत्वमपि कालिकसंबन्धेन वा वृत्तिमनिषेधो सत्तावान् जातेरित्यादौ तदप्रसिद्धि । द्रव्यभिन्न विशिष्टसत्त्वादित्यादौ हेत्वभावाभावे सत्त्वादौ तादृशतत्त्ववृत्तित्व [ एवं स्वाभावाधिकरणावृत्तिसाध्याभावयोर्णी च सत्ताभाववान् आत्मभावादित्यादौ च हेत्वभावाभावे स्वाभावाधिकरणे साध्यवत्तामहविरोधितानियामकसमवायेन वृत्त्यप्रसिद्ध्यादिकम् ] येन्यत आह—व्यापकतेति । एवं चेति । ननु सत्तावान् जातिमद्वृत्तित्व-

न्यायरत्न ।

वपरे तेन प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वविशेषणत्वेऽपि न क्षति । साध्याभावविशिष्टवह्न्यभावाभावप्रतियोगिताया वह्न्यभावत्वेनावच्छेदकत्वभङ्गस्तु न शक्य । तथा सति तादृशविशिष्टाभावस्य वह्न्यभावरूपदेशावच्छेदेन कालवृत्तित्वानुपपत्तेः । प्रतियोगितावच्छेदकावच्छिन्नानधिकरणदेशस्यैव कालवृत्तितावच्छेदकत्वादिति ध्येयम् । सकलशब्दस्य व्यापकत्वार्थकतयेति ।

१ मै पु. अधिकम्

कृष्णभट्टीय।

लक्षितधर्मावच्छिन्नाधिकरणवृत्तित्वावच्छिन्नप्रतियोगिताकाभाववत्साध्याभावाधिकरणताकत्वं साध्यव्यापकतावच्छेदकत्वम्। अथवा स्वावच्छिन्नप्रतियोगिताकाभावानधिकरणनिरूपिता या वृत्तिता तत्ताव्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्साध्याभावाधिकरणताकत्वं तत्। तेन प्रतियोगितावच्छेदककोटौ उपलक्षणविधया भानानुपगमेऽपि न क्षतिरिति वाच्यम्। एतद्धर्मस्य स्वाधिकरणावृत्तिसाध्याभावरूपपर्यन्तमाधित्वया किं न रोचयेदित्यनुयोगस्य निष्परिहरत्वात्। यत्तु साध्याभावसामानाधिकरण्यं हेतुतावच्छेदकस्वरूपान्यतरसम्बन्धेन वाच्यम्। तेन सत्तावान् जातेरित्यादौ न दोष इति। तदसत्। अन्यतरत्वेन संसर्गत्वानुपगमात्। उपगमेऽपि वा पर्वतो वह्निमान्पर्वतानुयोगिक वह्निविशिष्टकालिकसम्बन्धेन पर्वतत्वाभावादित्यादौ हेतुतावच्छेदकस्वरूपसम्बन्धान्यतरात्मकस्वरूपसम्बन्धेन पर्वतत्वाभावात्मकाभावस्य साध्याभाववद्वृत्तित्वाद्व्यापकत्वानुपपत्तेः। विशेषरूपेण संसर्गतानुपगमेऽपि महाकालान्यत्वविशिष्टनित्यत्वाभावात्मकालिकसम्बन्धेनाकाशाभावादित्यादौ हेत्वभावाभावस्याकाशाभावस्य साध्याभाववति नित्ये स्वरूपसम्बन्धेन सत्त्वादव्याप्तेः। साध्याभाववद्वृत्तितावच्छेदकप्रतियोगिताविशेषो न कोऽपि दोष इति बोध्यम्। यत्तु प्रतियोगिवैयधिकरण्यविशिष्टसाध्याभाववत्किंचिद्वृत्तितानवच्छेदकान्यत्वमेव साध्याभावव्यापकतावच्छेदकत्वं धूमवान्वह्निरित्यादावतिव्याप्तिवारणाय यत्किंचिदिति। कपिसंयोगादिसाध्यकस्थलाय प्रतियोगिवैयधिकरण्यम्। वृत्तित्वं च स्वरूपसम्बन्धेनेति तत्तुच्छम्। सत्ताभाववान् जात्यभावादित्यादौ जातीनां स्वरूपसम्बन्धेनासत्त्वेन हेत्वभावस्य तादृशवृत्तितानवच्छेदकत्वेनाव्याप्तेः। यत्तु वह्निमान् गगनादित्यादौ व्यभिचारे गगनाभावस्य प्रतियोगिवैयधिकरण्यविशिष्टवह्न्यभावाधिकरणयत्किंचित्स्वात्मकभूतलवृत्तितावच्छेदकतया तादृशवृत्तितानवच्छेदकगगनत्वाभ्यन्यत्वादतिव्याप्तिरिति। तदशुद्धमेव। तथाविधवैशिष्ट्याधिकरणवृत्तितानवच्छेदकत्वसत्त्वात्। महाकालान्यत्वविशिष्टनित्यत्वे साध्ये कालिकसम्बन्धावच्छिन्नघटत्वाभावस्तु व्यभिचारीति न दोषलेशोऽपीति। ननु साध्याभाववद्वृत्तित्वादिलक्षणेषु साध्याभाववद्वृत्तित्वादिकं न सम्बन्धसामान्येन, प्रसिद्धानुमान एव गमकत्वात्। नापि यत्किंचित्सम्बन्धेन, निर्धूमत्वेन त्वाभावमादायातिव्याप्तेः। नापि स्वरूपहेतुतावच्छेदकान्यतरसम्बन्धेन, अन्यतरत्वेन संसर्गत्वानुपगमात्। तदुपगमेऽप्यात्मभिन्नं घटाभावादित्यादौ कालिकसम्बन्धेन हेतौ साध्याभाववति स्वरूपसम्बन्धेन हेतोः सत्त्वादव्याप्तेः। यत्तु तादृशवृत्तित्वाभाव एव हेतुतावच्छेदकावच्छिन्नाधिकरणतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य विशेषणम्। ननु वृत्तित्वेऽपि

१ तथैव मे

कृष्णभट्टीय ।

स्वरूपसम्बन्धनिवेश इति न कोऽपि दोष इति । वह्निदोपरूपेण संसर्गतान्नीकर्तृभिर्भट्टाचार्यैर्वचनमेव । तस्माद्धेतुतावच्छेदकसम्बन्धान्यहेतुप्रतियोगिकसम्बन्धान्यसम्बन्धावच्छिन्नत्व तादृशहेतुप्रतियोगिकसम्बन्धावच्छिन्नत्व वा वृत्तित्वे विशेषणम् । तथाच सत्तावान् जातेरित्यादौ तथाविधस्वरूपसम्बन्धावच्छिन्नवृत्तित्वस्य सत्त्वान्नाव्याप्तिः । अयाता मभिन्न प्रमेयादित्यादौ कालिकसम्बन्धेन हेतुताया हेतुतावच्छेदको य कालिकसम्बन्ध तदन्यप्रमेयप्रतियोगिकसम्बन्धो यस्तन्निष्ठ कालिकसम्बन्ध एवेति तदवच्छिन्नसाध्याभावाधिकरणीभूता मवृत्तित्वाप्रसिद्ध्याऽव्याप्तिः । एवं सत्तावान्प्रमेयादित्यादौ समवायेन विषयितया च हेतावपि समवायादेव तादृशसम्बन्धत्वाद्धेतुप्रतियोगिकत्वघटकहेतौ हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्व निरर्थकं । उक्तहेतुष्वव्याप्त्यनुद्धारात् । अथ साध्याभाववद्वृत्तित्वादेर्यद्धर्मावच्छिन्नानुयोगिताकत्वं तद्धर्मावच्छिन्नप्रतियोगिकत्वस्य हेतुप्रतियोगिकत्वस्यार्थः । दर्शितस्थले चा मवृत्तित्वस्य तत्त्वादिरेव तथाविधो धर्मं धूमवान्वह्नेरित्यादौ चा नैन्धनप्रभववह्नित्वादेस्तादृशधर्मस्येऽपि न क्षतिरिति चेन्न । आत्मवृत्तित्वावच्छिन्नप्रतियोगिताकाभावस्य कथमपि स्वरूपसम्बन्धे न हेत्वव्याप्त्यनुद्धाराणिति चेन्न । यथा समवायसम्बन्धावच्छिन्नप्रमेयाभावाभाववत्त्व सत्तायामेवोपेयते । एवं कालिकसम्बन्धावच्छिन्नप्रमेयाभावाभाव व [ कालिकमात्रवृत्तिधर्मैर्विषयितासम्बन्धावच्छिन्नप्रमेयाभावाभावत्वच ] विषयितायामेव । तथाच हेतुप्रतियोगिकत्व हेत्वभावाभावत्वावच्छिन्नप्रतियोगिताकत्वमेवेति न कोऽपि दोषः । एवमसत्यभिन्न समवायतद्विशेषभयसम्बन्धेन कालवृत्तित्वविशिष्टप्रमेयादित्यादौ हेतुतावच्छेदकसम्बन्धान्यसम्बन्धाप्रसिद्धिरव्यापाला । नचैवमुक्तस्थलेऽव्याप्तिस्तदवस्थैव । धूमवान्वह्नेरित्यादावतिव्याप्तिवारणार्थं हेतुतावच्छेदकावच्छिन्नानुयोगिताकत्वस्य साध्याभाववद्वृत्तित्वे आवश्यकतया तथाविधसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य तादृशानुयोगिताकत्वाभावादिति वाच्यम् । हेतुतावच्छेदकावच्छिन्नानुयोगिताकत्वस्य तदवच्छिन्नव्यापकत्वात् च्छेदकावच्छिन्नानुयोगिताकत्वरूपत्वात् । अथवा केवलान्वयिनमन्योन्याभावप्रतियोगितानवच्छेदकहेतुतावच्छेदकत्ववत्त्वात्यन्ताभावप्रतियोगिताघटकत्वान्यतरवत्त्वमीदृशस्थले व्याप्तिर्मूलत्वमेवेति । वैयधिकरण्यघटकेऽपि हेतुतावच्छेदकसम्बन्धान्यहेतुप्रतियोगिकसम्बन्धानवच्छिन्न साध्याभाववद्वृत्तित्व निवेशयितु शक्यम् । [ नैवं वह्निमान्संयोगेन रूपादित्यादावतिव्याप्ति हेतुतावच्छेदकसम्बन्धेन तन्निवेशितसाध्याभावात् । एवञ्च हेत्वभावादौ प्रतियोगिवैयधिकरण्यनिवेशेऽपि सत्तावान्द्रव्यत्वादित्यादौ न दोष इत्यालोच्य तत्तादृशसम्बन्धनिवेशो आवश्यकत्वात् हेत्वभावे प्रतियोगिवैयधिकरण्य परित्यज्य

१ मैं पु भ २ तथाच इ सं पा ३ ह मैं पु अ पा

अस्तु वा हेतुतावच्छेदकसंबन्धेन हेतुमत्ताज्ञानं प्रति यादृशसंबन्धेन हेत्वभाववत्ताग्रहप्रतिबन्धकः तादृशसंबन्धेन स्वावच्छिन्नाधिकरणभिन्नसाध्याभावाधिकरणकं यद्वत्त्वं तद्भिन्नत्वमेव सा-

कृष्णभट्टीयं ।

निराकृत्य व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यं स्वावच्छिन्नानधिकरणत्वरूपं साध्याभाववति निवेश्य तद्वृत्त्यभावप्रतियोगित्वं वैयर्थ्यात्परित्यज्य निष्कर्षमाह—अस्तु वेति ] तथापि हेत्वभावे प्रतियोगिवैयधिकरण्यनिवेशानुरोधेनाह—अस्तु वेति । व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यं च स्वावच्छिन्नानधिकरणत्वमेव साध्याभाववति तद्वृत्त्यभावप्रतियोगित्वं वैयर्थ्यात्परित्यज्यायं निष्कर्षः कृतः । हेतुतावच्छेदकसंबन्धेन हेतुमत्ताग्रहविरोधितासंबन्धेन साध्यताव्यापकताया अवच्छेदकत्व तद्धर्मावच्छिन्नाभावाधिकरणतात्वं तद्धर्मत्वमित्युभे यद्यपि दोषाभावस्तथापि अस्तु वेत्यादिना गुरुधर्मानुसरणं परमनिष्प्रयोजनमेवेति बोध्यम् । हेतुतावच्छेदकसंबन्धेनेत्यस्यानुपादाने तत्संबन्धभिन्न कालिकसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावादिमत्त्वादौ कालिकसंबन्धेन व्यभिचारिण्यतिव्याप्तिः कालिकसंबन्धस्य स्वरूपसंबन्धेन हेतुमत्ताग्रहविरोधितानियामकतया न कालिकसंबन्धेन स्वावच्छिन्नानधिकरणत्वस्य व्यभिचारनिरूपकाधिकरणीभूततत्संबन्धासमानकालीनपदार्थमादायैवोपपादनीयत्वात् ।

अथवा अयमात्मा कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावादित्यादौ स्वरूपसंबन्धेन व्यभिचारिणि स्वरूपसंबन्धस्यापि यत्किंचित्संबन्धेन हेतुमत्ताग्रहविरोधितानियामकतया तेन स्वरूपसंबन्धेन स्वावच्छिन्नानधिकरणत्वं गगनाभावमादाय न संभवतीति गगनाभावत्वादिकं स्वपदेनोपादाय तदवच्छिन्नानधिकरणं साध्याभावाधिकरणं यत्किंचित्क्षितिस्तस्य हेत्वभावे सत्त्वादतिव्याप्तिरतो हेतुतावच्छेदकसंबन्धेनेत्युक्तम् । अथवा हेतुमत्ताग्रहविरोधित्वं तादृशग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं चेत्तदा स्वरूपसाध्यके न व्यभिचारिणि आत्मा हेतुमान्पर्वतश्च घटवानिति समूहालम्बनरूपं हेतुमत्ताग्रहमादाय पर्वतो घटाभाववानिति प्रतिबन्धकीभूतग्रहविषयीभूतस्वरूपसंबन्धेन गगनाभावत्वावच्छिन्नानधिकरणकान्यत्वस्य हेत्वभावे सत्त्वादतिव्याप्तिः । हेतुमत्ताग्रहत्वावच्छिन्नत्वनिवेशोऽप्यवच्छेदकत्वपर्याप्तिनिवेशोऽसंभवः । तन्निवेशो यत्किंचित्संबन्धेन हेतुमत्ताग्रहमादायोक्तदोषप्रसक्त्यावच्छिन्नत्वं व्यापकत्वघटकं वाच्यम् । एवञ्च निखिलसंबन्धेन हेतुमत्ताग्रहव्यापिका न कापि प्रतिबध्यतेति हेतुतावच्छेदकसंबन्धेनेत्युक्तम् । न च तन्निवेशोऽपि विभिन्नधर्मितावच्छेदकहेतुमत्ताग्रहमादाय व्यापकत्वभङ्ग एवेति वाच्यम् । तेन संबन्धेन यत्किंचिद्धर्मावच्छिन्नधर्मिकहेतुमत्ताग्रहव्यापकत्वस्य निवेशनीयत्वात् । आत्मघटान्यतरवृत्तिधर्मवान् कालिकसंबन्धावच्छिन्नसमवायाभावमसमवायसंबन्धावच्छिन्नसमवायाभावोभयस्याद्वित्वादौ वि-

यस्यैवाधिकरणभिन्नत्वस्थाने निवेशनीयत्वात् । कपिसंयोगाभावादेरिव तदधिकरणताया अप्यव्याप्यवृत्तितया तदभावस्य साध्याभाववति सत्त्वेनातिव्याप्त्यनवकाशात् । अधिकरणत्वाभावादिश्चाभावप्रतियोगिकतयाऽतिरिक्त एवेति विशेषणताविशेषेणैव तद्वत्त्वं साध्याभाववति विवक्षणीयमिति । एवञ्च निर्धूमत्वव्याप्यवान् निर्वह्निव्यादित्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वेऽपि हेत्वभावत्वेन तेषां साध्याभावव्यापकत्वात्राव्याप्तिरिति पूर्वपक्षोऽप्यकिञ्चित्करः । यत्र यावता साध्याभाववता सम्भवस्तत्रापि प्रातिस्विकरूपेण तत्तदधिकरणवृत्तित्वमेव हेत्वभावविशेषणतया लक्षणघटकं । ननु साध्याभावव्यापकत्वमित्यभिप्रायेणैतद्दोषदानात् । प्रकारान्तरानुसरणेन परिष्कारे सकललक्षणानामेव परिष्कारसम्भवादलं पल्लवितेन । इति चतुर्थलक्षणदोषः ॥

कृष्णभट्टीय ।

[ यदि च, प्रतियोगिवैयधिकरण्यविशिष्ट, यद्धर्मावच्छिन्नाभावत्वमेव, स्वावच्छिन्नाधिकरणभिन्नसाध्याभावाधिकरणकान्यत्वानुयोगितया निवेश्यते । तदा मूलवृक्षत्वव्याप्यकपिसंयोगाभावात्मेत्यादावव्याप्त्यभावेऽपि लाघवादेव न देयमिति ग्रन्थाशयो बोध्यः ।] ननु तत्रतद्वृक्षत्वव्याप्यकपिसंयोगादित्यादौ हेत्वभावत्वावच्छिन्नाधिकरणाप्रसिद्ध्याऽतिव्याप्तिरित्यत आह—अधिकरणत्वाभावश्चैवेति । ननु हेत्वभावाधिकरणत्वाभावो हेतुरूपएव तथा तथाच वह्निमान्धूमादित्यादौ वह्न्यभाववत कालिकसम्बन्धेन घटत्वादव्याप्तितो हेतुतावच्छेदकसम्बन्धेन स्वावच्छिन्नाधिकरणत्वाभावस्य निवेश्यम् । तथाच साध्याभाववति सामान्यादौ तेन सम्बन्धेन तद्वत्त्वाप्रसिद्ध्या सत्तावान् जातेरित्यादावव्याप्तिरत आह—अधिकरणत्वाभावादिश्चेति । यत्रेति । साध्याभाववद्विशिष्टसकलव्यक्तिस्वावच्छिन्नवृत्तिहेत्वभावेत्यर्थः । एकविपक्षके साकल्यं न देयमेवेत्याशयः । ननु साध्याभाववत्ताया निरवच्छिन्नत्व दातुं शक्यते । संयोगिभिन्न गुणत्वादित्यादावव्याप्तिः । अतएव साध्याभावे निरवच्छिन्नवृत्तिकत्वमवच्छिन्नवृत्तिकान्यत्वं वा कपिसंयोगसाध्यकाव्याप्तेः । आद्ये कथञ्चित्तद्विशिष्टसाध्याभाववत्त्वानिवेशेनादोषेऽपि द्वितीये तथाविधसाध्याभावाप्रसिद्धेरतः साध्याभावे प्रतियोगिवैयधिकरण्यविशेषणं युज्यते । हेत्वभावे तु गुरुतरप्रतियोगिवैयधिकरण्यविशेषणं हेयमेव, किंतु लाघवात् साध्याभाववति साकल्ये निरवच्छिन्नवृत्तित्वमेव दीयताम् । नचैवमात्मभिन्न कालि

१ विशेषणमिति मे पाठ     २ ० ८ मे पु स.

अत्रान्योन्याभावस्य साध्यत्वावच्छिन्नप्रतियोगिताकत्वं व्यु-

---

[ अथ पञ्चमलक्षणम् । ] साध्यतद्व्यक्तिभेदमादायाति(ति)व्याप्तिं परिहरति—अत्रेति । साध्यत्वावच्छिन्नप्रतियोगिताकत्वमिति । साध्यतावच्छेदकविशिष्टसाध्यपर्याप्तप्रतियोगितावच्छेदकताकत्वमित्यर्थः । तेन वह्निमान्धूमादित्यादौ तत्तद्वह्निमत्त्वावच्छिन्नप्रतियोगिताकभेदमादाय न दोषः तादृशभेदप्रतियोगितावच्छेदकतापर्याप्तत्ववि-

कृष्णम्भट्टीयं ।

कसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वादित्यादौ कालिकसंबन्धावच्छिन्नद्रव्यभावमादायातिव्याप्तिर्दुर्वारैवेति ध्येयम् । पूर्वमते प्रतियोगितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वासत्त्वेपि एतन्मते तन्निवेशस्यावश्यकत्वादिति ध्येय । एतन्मते द्रव्यभिन्न संयोगिभेदादित्यादावव्याप्तेः प्रतियोगिवैयधिकरण्यस्यैवावश्यकत्वात् । अथवा संयोगिभेदाभावस्य द्रव्यत्वादिरूपत्वोपगमेऽपि साध्याभाववत्तायां हेत्वभाववत्तायां वा न निरवच्छिन्नत्वमुचितं । तथासति साध्यादिमत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नत्वस्यापि निवेशनीयत्वापत्तेः । अस्मन्मतेऽखण्डप्रतियोग्यधिकरणत्वनिवेशे लाघवादित्यभिप्रायः । इति चतुर्थलक्षणदोषः चतुर्थलक्षणं च समाप्तम् ।

[ अथ पञ्चमलक्षणम् । ] साध्यतावच्छेदकेति । विपयितया वह्निमत्त्वविशिष्टवद्भेदवारणाय साध्यतावच्छेदकनिष्ठावच्छेदकतायां साध्यतावच्छेदकसाधटकसंबन्धावच्छिन्नत्वमावश्यकं तथाच तेनैवोक्तभेदवारणे तद्विशेषणवैयर्थ्यं । नच रूपवान् पृथिवीत्वादित्यादौ विपयितया रूपत्वविशिष्टवद्भेदवारणार्थमेव तद्विशेषणं प्रतियोगितावच्छेदकतायां साध्यनिष्ठत्वनिवेशेऽपि गुणवान् पृथिवीत्वादित्यादौ विपयितया गुणत्वविशिष्टवद्भेदो दुर्वार एवेति वाच्यम् । साध्यतावच्छेदकव्यापकत्वस्य प्रतियोगितावच्छेदकताया निवेशनीयत्वादिति । नैवम् । व्यापकशरीरे साध्यतावच्छेदकसाधटकसंबन्धेन साध्यतावच्छेदकवत्त्वस्यावश्यकतया प्रकृत व्यापकतानिवेश एव गौरवादिति । वह्निघटोभयवद्भेदवारणाय पर्याप्तेति । अनुयोगितावच्छेदकावच्छेदेनैवेति एवकारः । प्रकारकृत्पद च तत्सामानाधिकरण्यपरत्वप्रयोगो नास्तीति प्रदर्शनाय । तेन जलं न द्रव्यं गन्धवदिति वाक्यस्य नत्र-

न्यायरत्नं ।

वेति । तद्दाने एतद्वृक्षत्वान्कपिसंयोगादित्यादावनुचातिव्याप्तिं वारयत्यधिकरणत्वाभावत्वैकैत्यादिना । इति चतुर्थदोषः चतुर्थलक्षणंच समाप्तम् ।

---

१ निवेश्य ।

त्पत्तिबललभ्यम् । नहि भवति नीलो घटो घटादन्य इति ॥
इति दीधितौ पञ्चलक्षणी समाप्ता ॥

---

शिष्टवह्निमत्त्व एव पर्याप्तत्वात् । व्युत्पत्तिबललभ्यम् अन्यादिपदसमभिव्याहारबललभ्यम् । नञ्पदसमभिव्याहारज्ञानस्यैव तादृशपदसमभिव्याहारज्ञानस्याप्यन्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावशाब्द(बुद्धि)त्वावच्छिन्नं प्रत्येव जनकत्वादिति भावः । व्युत्पत्तिबललभ्यमित्यनेन यथाश्रुतलक्षणवाक्यार्थ एवायमिति सूचितम् । तादृशसमभिव्याहारस्थले तत्प्रतियोगिताकाभावमात्रबोधेऽतिप्रसङ्ग सूचयति—नहि भवतीति । प्रामाणिकव्यवहार इति शेषः । तथाचान्वयिप्रतियोगिकाभावमात्रबोधे नीलघटेऽपि पीतघटादिभेदसत्त्वेन तादृशव्यवहारोपि स्यादिति भावः । द्रव्यं न घट इत्याद्यप्रयोगात् । अनुयोगितावच्छेदकावच्छेदेनैवान्योन्याभावादिरन्यादिपदेन प्रत्याय्यते । अनुयोगितावच्छेदकश्च प्रतियोग्यवृत्तिरेव धर्म इति प्रकाशकृदङ्गीकृतव्युत्पत्त्यविरोधाद्धटो घटा(द)न्य इति प्रयोगवारणसम्भवात् । नील इति । घटादन्य इत्यादौ प्राचीनमते पञ्चम्याः

कृष्णभट्टीय ।

धेयोद्देश्यतावच्छेदकत्वेन उपभिन्न प्रत्ययमित्यर्थनिराकरणपरत्वमन्यादिरोध । अन्यथा अनुयोगितावच्छेदकसामानाधिकरण्येनाभावादेव तादृशार्थप्रसक्तेरसङ्गतेरिति । अनुयोगितेति । अव्याप्यवृत्तिद्वित्वावच्छिन्नोऽस्य तदनवच्छेदक एवानुयोगितावच्छेदक इदानीं द्वित्वादिविशिष्टप्रतियोगिनोभकपदासमभिव्याहृतनञ् द्वित्वावच्छिन्नाभावबोधकत्वनियम स्वीकार्य । तेन द्वित्वान्वयिप्रतियोगिभेदस्य घटत्वावच्छेदेन सत्त्वाद्धटो घटान्य इति प्रयोगस्य दुर्वारताप्रसङ्ग । पश्चात्तु प्रयोजनाभावेनैव एतत्परित्याग इत्यपि द्रष्टव्य । विरोधादिति । वारणेत्यनेनान्वित । अनुरोधादित्यपि पाठ । ननु नीलघटान्यस्य कथं प्रतियोग्यवृत्तित्वमिति चेत् । विशिष्टस्यावान्तरत्वात् गुणान्य इति व्यवहारस्य प्रामाण्याय तद्धर्मावच्छिन्नत्वस्य । प्रतियोग्यवृत्तियद्धर्मो वा प्रतियोगिवृत्तितानवच्छेदक तद्धर्मावच्छिन्नस्यैव भेदानुयोगितावच्छेदकत्वमिति न कोपि दोष । नीलघटत्वावच्छिन्नवत्त्व च घटावृत्तीति दीधितिकारोक्तव्युत्पत्तिरप्यावश्यकीति बोध्यम् । साध्यवदन्येति समासे साध्यवत्त्वावच्छिन्नप्रतियोगिताकस्यैव एकव्यक्तित्वात्तदुत्तरभावप्रत्ययघटितत्वं दीधितिकृतामनुचितमित्याशङ्कापरिहाराय साध्यवतोऽन्येति व्यास इव समासस्थले साध्यव

प्रतियोगित्वमर्थः। तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य घटत्वाद्यवच्छिन्नत्वविशिष्टाधेय(ता)त्वसम्बन्धेनान्वयः। अथवा केवलमाधेयत्वमेव (वा) घटस्य सम्बन्धः। धर्मिपारतन्त्र्येण घटत्वादेरपि अवच्छिन्नत्वसम्बन्धेन तत्रान्वयोपगमात्। एक(त्र)विशेषणत्वेनोपस्थितस्यान्यत्र पारतन्त्र्येणान्वयस्य व्युत्पत्तिसिद्धत्वात्। प्रतियोगित्वस्य व्युत्पत्तिवैचित्र्येणान्यपदार्थैकदेशे भेदे निरूपकतासम्बन्धेनान्वयः। घटान्य इत्यादौ निरूपकतासम्बन्धेन घटत्वाद्यवच्छिन्नप्रतियोगिताविशिष्टो लक्षणया घटादिपदार्थः। तत्पुरुषे पूर्वपदस्य तत्तद्विभक्त्यर्थविशिष्टे लाक्षणिकत्वात्। तादृशघटादिपदार्थस्य चाभेदसम्बन्धेन भेदेनान्वयः। नवीनमते (च) घटादन्य इत्यादौ अनुयोगित्वं पञ्चम्यर्थः। तत्र च प्रकृतार्थस्य घटत्वादिविशिष्टस्य स्ववृत्तिघटत्वाद्यवच्छिन्ननिरूपकताकत्वसम्बन्धेनान्वयः। अनुयोगितायाश्चाश्रयतासम्बन्धेन भेदेऽन्वयः। समासस्थले च घटत्वाद्यवच्छिन्ननिरूपितानुयोगिताविशिष्टे पूर्वपदस्य लक्षणा तस्य चाभेदसम्बन्धेन भेदेऽन्वयः। अथैवं साध्यवदन्यावृत्तित्वमित्येतादृशलक्षणवाक्यात् अभेदसम्बन्धेन तादृशप्रतियोगिताविशिष्टविशेषितस्तादृशानुयोगिताविशिष्टविशेषितो वा यो भेदस्तद्वदवृत्तित्वमेव प्रतीयते। तथा चानुमित्यौपयिकव्याप्तिस्वरूपजिज्ञासायां तादृशलक्षणाभिधानेऽर्थान्तरप्रसङ्गः। तादृशप्रतियोगितासम्बन्धेन तादृशानुयोगितासम्बन्धेन वा साध्यवद्विशेषि-

कृष्णभट्टीय।

त्वाद्यवच्छिन्नप्रतियोगिताकत्वलाभः कथमित्यत आह—तादृशप्रतियोगितायाः सम्बन्धत्वानुपगमात्। अवच्छिन्नत्वविशेषितप्रतियोगितायाः अलाभादाह—अथवेति। घटादन्यो न घटादित्यादौ पञ्चम्या प्रतियोगित्वं चेत्यर्थः। तदा घटनिष्ठप्रतियोगिताया निरूपकतासम्बन्धावच्छिन्नाभावबोधो वाच्यः। न च निरूपकत्वस्य वृत्त्यनियामकतया तादृशाभावप्रसिद्धिर्न सम्भवतीति नवीनमतानुधावनम्। अनुयोगित्वं चाश्रयतास्वस्वरूपसम्बन्धेन वर्तते। तत्सम्बन्धस्य च वृत्तिनियामकतया नानुपपत्तिरिति भावः। घटो नेत्यादौ प्रतियोगितासम्बन्धेनैव घटाभावबोधेऽपि न क्षतिः। यत्रे न वेत्यादेर्व्यवहारस्यैवाभाववादतो घटादन्य इत्यभिहितम्, इदानीं समासे तादृशप्रतियोगितान्वयं लम्भयितुमाशङ्कते—अथेति।

तभेदवद्वृत्तित्वज्ञानस्यैव लाघवेनानुमितिहेतुत्वादिति चेन्न । यादृशव्याप्तिज्ञानमनुमितिहेतुः तस्यामेवास्य तात्पर्यात् । तस्याः शाब्दबोधाविषयत्वेऽपि तन्मूलकोदीच्यतादृशव्याप्तिविषयिकमानसोपनीतभान(विषय)स्यैवादृशतात्पर्यनिर्वाह्यत्वात् तादृशशाब्दबोधस्यापि कथंचित् उपपादयितुं शक्यत्वाच्च । नीलो घटः कम्बुग्रीवादिमदन्य इत्यादिवाक्यस्याप्रामाण्यात् । घटः कम्बुग्रीवादिमदन्य इत्या-

कृष्णंभट्टीयं ।

द्यनुपायसंभवाच्चासंगतानुधावनं । कथंचिदिति । अन्यपदार्थैकदेशभेदे अभेदसंबन्धेन साध्यवदनुयोगिताकस्य भाने धर्मिपारतन्त्र्येण साध्यवतोऽपि तादृशानुयोगितासंबन्धेन तत्र भानोपगमादनुमितिविषयिकव्याप्तेरपि ततो लाभ । नील इति कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाभाववति नीलघटे तादृशभेदबोधकतया तद्वाक्यस्याप्रामाण्यं न संभवतीति तादृशभेदाप्रसिद्धिरिति भावः । कम्बुग्रीवादिमत्त्वावच्छिन्नान्यत्वप्रतियोगितायां तादृशावच्छिन्नत्वावगाहितया संसर्गकोटौ प्रवेशोपगमे तु तुल्यन्यायेन दोषमाह—घट इति । यद्वा कम्बुग्रीवादिमत्प्रतियोगिकभेदभानोपगमे घट इत्यादिवाक्यस्य प्रामाण्यनिर्वाहेऽपि नील इत्यादिवाक्यप्रामाण्यं न निर्वहति । कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदभानोपगमे तु नील इत्यादेरप्रामाण्यनिर्वाहेऽपि घट इत्यादेः प्रामाण्यं न निर्वहतीति बोध्यम् । तादृशावच्छेदकत्वसामान्याभावनिवेशे कम्बुग्रीवादिमत्त्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकतावारणापेक्षया घटत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकतायादेर्लघुतया प्रतियोगितावच्छेदकतया सामान्याभावाप्रसिद्धिरतः सूक्ष्मलिखितः । नन्वेवं वह्निर्न वह्निरिति प्रतीतिव्यवहारयोरापत्तिः । तादात्म्यत्वावच्छिन्नभेदसत्त्वात् । अथ तत्र तत्तद्व्यक्तिभेदभेदकूटाभानोपगमान्न दोष इति वाच्यम् । इन्धनं न वह्निरिति प्रयोगानुपपत्तेः । अथ पारिभाषिकावच्छेदके अन्वयितावच्छेदकधर्मसामानाधिकरण्यनिवेशान्न दोष इति वाच्यम् । कालिकादिसंबन्धेन इन्धनत्ववह्नित्वयोः समानाधिकरणत्वात् संबन्धविशेषविवक्षायामपि, वह्निर्न वह्नीन्धनान्यतर इति प्रयोगा-

न्यायरत्नं ।

**अथ पञ्चमलक्षणम् । शाब्दबोधस्यापि कथंचिदिति ।** साध्यवत्पदार्थे साध्यवत्तावच्छिन्नप्रतियोगिताकेऽभेदेनान्यपदार्थैकदेशे भेदेऽन्वीयमाने धर्मिपारतन्त्र्येण साध्यत्वावच्छिन्नप्रतियोगिताकसंबन्धेनान्वयः स्वीक्रियते । एवमन्यपदार्थे भेदघटितनिरूपितात्मकेऽभेदेन वृत्तित्वेऽन्वीयमाने धर्मिपारतन्त्र्येणान्यस्य निरूपितत्वसंबन्धेनान्वयः स्वीक्रियते । एवं वृत्तित्वपदार्थे वृत्तित्वप्रतियोगिताकात्मकेऽभेदेन वृत्तित्वात्मके वा साक्षात्प्रतियोगितासंबन्धेन तन्नात्मकनि-

दिवाक्यस्य च प्रमाणत्वात्। अन्वयितावच्छेदकनिरूपितपारिभाषिकमवच्छिन्नत्वं प्रतियोगितायां भासत इत्युपेयम्। अतः साध्यवदन्य इत्यादौ मतुबन्तप्रतिपाद्यतावच्छेदकस्य साध्यसंबन्धस्य साध्यापेक्षया गुरुतयाऽनवच्छेदकत्वेऽपि नोक्तलक्षणवाक्यार्थाप्रसिद्धिः

कृष्णभट्टीयं।

पत्ति। शाब्दो इन्धनत्वावच्छिन्नभेदसमवायादिति। किंच घटो न प्रमेयगगनमिति प्रयोगानुपपत्तिः। गगनत्वापेक्षया प्रमेयगगनत्वस्य गुरुतया तदवच्छिन्नभेदाप्रसिद्धेः। अत अन्वयितावच्छेदकनिरूपितपारिभाषिकावच्छिन्नत्वं प्रतियोगितायां भासत इति वक्तव्यम्। तथैवावच्छिन्नत्वं यदि स्वनिरूपकसंबन्धीत्यादिरूपं तदा संयोगेन गगनत्वविशिष्टसंबन्धिनोऽप्रसिद्धिरिति चेत्। अत्रेचित्। अन्वयितावच्छेदकव्यापकधर्मावच्छिन्नत्वं तात्पर्यं। एवं च प्रमेयगगनत्वरूपं यदन्वयितावच्छेदकं तद्व्यापकं यद्गगनत्वं तदवच्छिन्नत्वमेव पारिभाषिकतदवच्छिन्नत्वमित्यदोषः। स्वविशिष्टसंबन्धीत्यत्र संबन्धिपदं संपातायात स्वात्मकं वह्निविशिष्ट इति वा विवक्षितं। अभावपदं च भेदार्थकमिति तत्त्वम्। नन्वेवं वह्निर्न वह्निरित्यादिप्रयोगापत्तिर्दुर्वारैव। वह्नित्वरूपान्वयितावच्छेदकव्यापकीभूतो यो वह्निघटोभयत्वरूपो धर्मः तदवच्छिन्नभेदस्य बाधितत्वात्। तत्र व्यापकतायां प्रतियोगिवैयधिकरण्यं न देयं। तथा च वह्निघटोभयवृत्तित्ववद् वह्नित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेन वह्नित्वाव्यापकत्वेनेति वाच्यम्। वह्निर्न घटपटोभयमिति प्रयोगानुपपत्तेः। भेदप्रतियोगितावच्छेदकीभूतघटपटोभयत्वस्य अन्वयितावच्छेदकीभूतवह्नित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेन तद्व्यापकत्वसम्भवात्। एवं न ज्ञानित्यादिप्रयोगानुपपत्तिश्च। एवं च व्यापकतायां प्रतियोगिवैयधिकरण्यस्यावश्यकतया वह्निर्न वह्निरिति व्यवहारो दुर्वार एवेति चेन्न। अन्वयितावच्छेदकधर्मसमनियतधर्मावच्छिन्नत्वमेव तद्धर्मनिरूपितपारिभाषिकमवच्छिन्नत्वं घटवन्नुभयत्वं च न वह्नित्वेन समनियतमित्यदोषः। नन्वेवमपि केवलान्वयिवह्नित्वेन समनियतवाच्यत्वाद्युभयत्वावच्छिन्नभेदमादाय वह्निर्न वह्निरिति प्रयोगापत्तिरिति वाच्यम्। अन्वयितावच्छेदकसमनियतधर्म-

न्यायरत्न।

पातार्थेऽन्वीयमाने साध्यवद्विशेषितभेदवद्विशेषितवृत्तित्वावच्छिन्नस्यापि तादृशवृत्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वय स्वीक्रियत इति व्याप्तेः शाब्दबोध। न चाभेदेनैकविशेषितापरपदार्थघटितधर्मावच्छिन्नाभावाद्भेदेनैकपदार्थतावच्छेदकविशेषितापरपदार्थघटितधर्मावच्छिन्नाभावोऽन्य एव। प्रतियोगितावच्छेदकभेदादिति कथं निरुक्तान्वय इति वाच्यम्। समनियताभावानामैक्योपगमेन तादृशधर्मावच्छिन्नाभावयोर्भेदविरहात्। अप्रामाण्यादिति।

पारिभाषिकतदवच्छिन्नत्वं(च) वह्निविशिष्टसम्बन्धिनिष्ठाभावीया या या प्रतियोगिता तदवच्छेदकत्वाभावकूटवदवच्छिन्नत्वं । एतादृशावच्छिन्नत्वस्य सम्बन्धतया प्रातिस्विकरूपेण तत्तत्प्रतियोगिताव्यक्तीनां दु-

कृष्णभट्टीय ।

स्वान्वयितावच्छेदकसजातीयत्वेन विशेषणीयत्वात् । वस्तुतस्तु दृष्टान्वयितावच्छेदकव्यापकत्वमन्वयितावच्छेदकावच्छिन्नानुयोगिताकभेदप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वरूपमेव निवेश्यमिति न कश्चिद्दोषः । एको न द्वाविति प्रत्ययस्य प्रतियोगिवैयधिकरण्यमनिवेश्यापि निर्वाहसम्भवात् । वह्नि-घटोभयभेदमादाय वह्निर्न वह्निरिति प्रयोगापत्ते । समनैयत्यनिवेशं विनापि वारणसम्भवाच्च । एतेन व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वान्यतररूपेण सामान्यनिवेशने इमौ न द्वाविति प्रत्ययप्रसङ्ग । अन्वयितावच्छेदकसमनियतविषयभेदसत्त्वादिति परास्तमित्याहुः । तदसत् । तथा सति सत्ताया विशिष्टसत्ताभेदाभावेन सत्ता न सत्तेति प्रयोगवारणेऽपि गुणे न सत्तेति प्रयोगापत्तिः । विशिष्टसत्ताभावस्य सत्तात्वसमनियतत्वात् । तत्र विशिष्टसत्त्वभावसत्त्वात् । वस्तुतस्तु स्वविशिष्टसम्बन्धिनिष्ठाभाव प्रतियोगिव्यधिकरणो बोध्य तेन घटो न वह्निरित्यादौ वह्नित्वादेर्वह्निनिष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि न क्षतिः । सम्बन्धित्वं प्रतियोगिवैयधिकरण्यं चैकसम्बन्धेन । तेन घटो न प्रमेयगगनमित्यादौ गगनाधिकरणाप्रसिद्धावपि तादात्म्येन विषयतया वा सम्बन्धित्वप्रसिद्धेर्न दोषः । स्वविशिष्टगगनाभावस्य तेन सम्बन्धेन प्रतियोगिव्यधिकरणत्वाभावात् प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वं बोध्यम् । अत्र लक्षणवाक्यात्साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावकूटवदवच्छिन्नत्वसम्बन्धेन साध्यवद्विशेषिता या प्रतियोगिता तादृशप्रतियोगिताकभेदतदधिकरणावृत्तित्वलाभेऽपि तादृशो न व्याप्तिस्वरूपम् । साध्यवत्त्वं विहाय साध्यावच्छिन्नप्रतियोगिताकभेद लक्षणे निवेश्य तावद्वाक्येन अनुमित्यौपयिकत्वादित्याहुः ।

न्यायरत्न ।

अय भाव । तत्र कम्बुग्रीवादिमत्प्रतियोगिकभेदस्याबोपगमे तस्य नीलघटेऽपि सत्त्वेन तादृशवाक्यस्य प्रामाण्यापत्तिरतोऽन्वयितावच्छेदककम्बुग्रीवादिमत्त्वावच्छिन्नत्वस्यैव प्रतियोगितायां भानमभ्युपेय तस्य चाप्रसिद्धत्वात्संसर्गांशे भ्रमत्वमादाय तादृशवाक्यस्याप्रामाण्यं सम्पादनीय तथा सति घट कम्बुग्रीवादिमदन्य इत्यादे प्रामाण्यानिर्वाह इति । **तद्विशिष्टसंबन्धिनिष्ठाभावीया या या प्रतियोगितेति** । कम्बुग्रीवादिमत्त्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितावच्छेदकत्वत्वापेक्षया अन्वयितावच्छेदकत्वस्य लघुतया तादृशावच्छेदकत्वसामान्याभावप्रसिद्धिरिव कूटनिवेश । अथात्र यत्सम्बन्धावच्छिन्नप्रतियोगितानिरूपित पारिभाषिकावच्छेदकत्व प्रत्यायनीय तेन संबन्धेन सम्बन्धित्व प्रतियोगित्व च यदि विवक्ष्यते तदा समवायेन प्रमेयगगनं नास्तीत्यादावगतिः । समवाये गगनत्वविशिष्टसम्बन्धिनोऽप्रसिद्धे । यदि च तादात्म्यसम्बन्धेनैकसम्ब-

इष्यते कम्बुग्रीवादिमान्घटादित्यादौ विशेषदर्शिनामनुमितेः प्रामाणिकत्वे निरुक्तपारिभाषिकमवच्छिन्नत्वमेवानुमित्यौपयिकव्याप्तिघटकं । तादृशगुरुधर्मावच्छिन्नसाध्यकानुमानस्य केवलान्वयिसाध्यकसमशीलत्ववादिनस्तु स्वरूपसंबन्धावच्छिन्नत्वमेव व्याप्तिशरीरे निवेशयन्ति । इति पञ्चलक्षणी समाप्ता ॥

कृष्णंभट्टीयं ।

योगिताप्यप्रसिद्धेरित्यत आह—कम्ब्वियति । निरुक्तेति । साध्यविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकं यद्यत् तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवद्धर्मावच्छिन्नप्रतियोगिताकभेदघटितं सर्वत्र लक्षणं कार्यमित्यर्थः । पारिभाषिकावच्छिन्नत्वं न निवेशनीयं । किंतु स्वरूपसंबन्धरूपावच्छिन्नत्वमिति मतान्तरमाह—तादृशेति । तथा च साध्यतावच्छेदकस्य केवलान्वयित्वं च अत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्साध्यकत्वं । तथा च कम्बुग्रीवादिमत्साध्यकव्याप्तेरपि मूलकाराभिमतत्वेनेति भावः । केवलान्वयिभिन्ने द्रव्यं पृथिवीत्वादित्यादौ द्रव्यत्वत्वविशिष्टस्य केवलद्रव्यत्वापेक्षया गौरवेण तद्भेदाप्रसिद्ध्या अव्याप्तिरधिकैवेत्यस्वरसः ॥ इति कृष्णंभट्टीये पञ्चलक्षणीविवरणम् ।

न्यायरत्नं ।

बोधजनकत्वनिष्ठप्रकारतानिरूपितइच्छीयविशेष्यतासंबन्धेन साध्यसंबन्धविशिष्टप्रकारकप्रमान्यविशेष्यकज्ञानस्यैव तादृशशाब्दबोधहेतुतया तस्य च तादृशसंबन्धप्रकारकज्ञानाभावेन तादृशसंबन्धज्ञानाभावेपि न तदनुपपत्तिः । शाब्दबोधे संबन्धतात्पर्यज्ञानं न हेतुः किंतु प्रकरणज्ञानमेवेति मताभिप्रायेणेति केचित् । अनियतसंबन्धस्थल एव संबन्धतात्पर्यज्ञानं हेतुरित्यभिप्रायेणेदमुक्तसंबन्धस्य नियतत्वान्न तज्ज्ञानापेक्षेत्यपरे । यद्यपि प्रतियोगितानां तत्तद्व्यक्तित्वेन निवेशे तत्तत्प्रतियोगितात्वव्यापकावच्छेदकत्वाभावकूटवद्धर्मावच्छिन्नत्वमेव पर्यवसितं तच्च न कम्बुग्रीवादिमत्त्वस्य संबन्धः कम्बुग्रीवादिमत्त्वप्रतियोगिकपदार्थाघटितत्वात् तथापि स्वसमानाधिकरणतादृशकूटवद्धर्मावच्छिन्नत्वमेव संबन्धतया विवक्षितं सामानाधिकरण्यघटकाधिकरणतांशस्य कम्बुग्रीवादिमत्त्वप्रतियोगिकतया तद्घटितस्य निरुक्तकूटवद्धर्मावच्छिन्नत्वस्य कम्बुग्रीवादिमत्त्वसंबन्धत्वनिर्वाहः । यद्वा स्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवद्धर्मावच्छिन्नत्वमेव संबन्धः उभयावृत्तिपर्यन्तमुपलक्षणं । तस्य कम्बुग्रीवादिमत्त्वप्रतियोगिकपदार्थघटितत्वात्तत्संबन्धत्वनिर्वाह इति ध्येयम् । ( इति पञ्चलक्षणी संपूर्णा ) ॥

करणं यस्येत्यत्रासमानाधिकरणपदस्य स्वानधिकरणाधिकरणार्थकत्वे

न्यायरत्नं ।

काऽधिकरणनिरूपिताधेयतावान् लक्षणयाऽधिकरणपदार्थः समानपदं । तादृशार्थे लक्षणा तात्पर्यग्राहकमेव । समानाधिकरणपदोत्तरभावप्रत्ययेन तादृशाधेयत्वं बोध्यते । साध्यस्य सामानाधिकरण्यमित्यत्र साध्यपदोत्तरषष्ठ्यर्थ आधेयत्वं तस्य सामानाधिकरण्यपदार्थघटकाधेयतायामन्वयस्तादृशसाध्यसामानाधिकरण्यपदार्थस्य नञर्थेऽभावेऽन्वय इति साध्यनिष्ठाधेयतानिरूपकाधिकरणनिरूपितवृत्तित्वाभावः साध्यासामानाधिकरण्यपदार्थः । **तदनधिकरणवृत्तित्वस्येति ।** समानमेव सामानं साध्यस्य सामानं न भवतीति साध्यासामानं तदधिकरणं यस्य स साध्यासामानाधिकरणस्तस्य भावः साध्यासामानाधिकरण्यमिति विग्रहे, समानपदार्थः आधेयतानिरूपकं तदेकदेशाधेयतायां साध्यपदोत्तरषष्ठ्यर्थाधेयताया अन्वयः नञर्थो भेदस्तत्र तदेकदेशे भेदे प्रतियोगितया समानपदार्थान्वयः तथाच साध्यनिष्ठाधेयतानिरूपकभेदवान्साध्यासामानपदार्थः साध्यासामानमधिकरणं यस्येति बहुव्रीहावधिकरणपदार्थः आधेयतानिरूपकं तदेकदेशाधेयतायां यत्पदोत्तरषष्ठ्यर्थाधेयताया अन्वयः तथाच यन्निष्ठाधेयतानिरूपकं साध्यनिष्ठाधेयतानिरूपकभिन्नमिति विग्रहवाक्यार्थः. समासतात्पर्ये साध्यानधिकरणवृत्तिर्लक्षणयाऽधिकरणपदार्थः साध्यासामानपदं तादृशलक्षणातात्पर्यग्राहकं भावप्रत्ययेन तादृशवृत्तित्वं बोध्यत इति साध्यानधिकरणवृत्तित्वं साध्यासामानाधिकरण्यपदार्थ इति केचित् । परेतु साध्यपदं साध्याधिकरणलक्षकं समानपदस्याभिन्नत्वमर्थः भावप्रधानो निर्देशः यद्वा अभिन्नत्वं तदर्थस्तथाच साध्यसमानमित्यस्य साध्याधिकरणाभिन्नमित्यर्थः ततश्च साध्यसमानं न भवतीति व्युत्पत्त्या नञोऽभाववति लाक्षणिकतया साध्याधिकरणभेदाभाववान्साध्याधिकरणभिन्नपर्यवसितः साध्यासामानपदार्थः अधिकरणत्वादिनाऽभेदप्रतियोगिकाभावरूपस्य अन्यतरोभयावृत्तिधर्मवत्तात्मकतादात्म्यरूपस्य वाऽभेदस्यापि ससंबन्धिकेन वृत्तित्वेन वा घटिततया ससंबन्धिकत्वाभावो अभ्यविशेषस्यापि साधुत्वाविघटकत्वात्तादृशार्थकसाध्यासामानपदेनाधिकरणपदस्य बहुव्रीहौ भावप्रत्यये च साध्यानधिकरणवृत्तित्वं साध्यासामानाधिकरण्यपदाल्लभ्यत इति वदन्ति । **वक्ष्यमाणलक्षणाभेद इति ।** साध्यवैयधिकरण्यानधिकरणत्वरूपलक्षणाभेद इत्यर्थः तत्रापि साध्यस्य वि अधिकरणं यस्य स साध्यव्यधिकरणस्तस्य भावः साध्यवैयधिकरण्यमिति विग्रहे वि पदस्याधिकरणं भेदश्च खण्डशस्तदर्थः अन्यथानानेकार्थत्वात्पञ्चम्यन्तसाध्यपदार्थान्विताधिकरणस्य भेदे तस्य चाधेयतानिरूपकत्वगाधिकरणपदार्थेऽधिकरणपदार्थैकदेशाधेयतायां यत्पदोत्तरषष्ठ्यर्थाधेयतास्यान्वये यन्निष्ठाधेयतानिरूपकं साध्याधिकरणभिन्नमिति विग्रहवाक्यार्थबोधः । समासे तु साध्याधिकरणभिन्नवृत्तिर्लक्षणयाऽधिकरणपदार्थः पूर्वपदे तात्पर्यग्राहके भावप्रत्ययेन तादृशवृत्तित्वं बोध्यत इति साध्यानधिकरणवृत्तित्वं साध्यवैयधिकरण्य-

द्रव्यं सत्त्वादित्यादावतिव्याप्तिः। द्रव्यत्वादेः सत्ताद्यनधिकरणत्व-विरहेण यत्पदेन सत्त्वादेरुपादानासम्भवात्। सत्तावान् द्रव्यत्वादित्या-

कृष्णभट्टीयम्।

सामानाधिकरण्यशब्दादेव साध्याधिकरणावृत्तित्वलाभो भवेत्। तथाच कथं तदधिकरणावृत्तित्वरूपासामानाधिकरण्याभिधानमिति। तथापि तदन्विताधिकरणेत्यर्थविवक्षणाच्च दोषः। स्वरीत्या तत्सम्बन्धिकार्थत्वप्रकाशनादेव तथोक्तमिति बोध्यम्। समानमेव सामानं न सामानं असामानं साध्यस्य असामानं साध्यासामानम् तत् अधिकरणं यस्य स साध्यासामानाधिकरणः तस्य भावः साध्यासामानाधिकरण्यं साध्यानधिकरणवृत्तित्वमिति यावत्। अस्मिन्पक्षे पौनरुक्त्यं दर्शयति। तदन्यथीति। साध्यमसमानाधिकरणं यस्येति विग्रहवाक्यम् असमानाधिकरणमित्याकारकबहुव्रीहिरूपोत्तरपदगर्भमिति प्रथमतो समानाधिकरणमिति बहुव्रीहेर्विग्रहं प्रदर्शनीयम्। तत्र न समानं अधिकरणं यस्येत्येवरूपः तत्र यदि नञर्थभेदे समानपदार्थस्य वैशिष्ट्याधिकरणादेः प्रतियोगितया अन्वयस्तदा साध्याधिकरणभिन्नभेदप्रतियोगित्वसमानपदार्थीभूतवैशिष्ट्याद्यधिकरणं प्रत्याय्येत। तथासति साध्यं असमानाधिकरणं यस्येति द्वितीयबहुव्रीहिविग्रहवाक्यात् यदधिकरणं यावत्किञ्चिद्भेदप्रतियोगिताकभेदानुयोग्यधिकरणकं साध्यं प्रतीयेत। तत्र अतिव्याप्त्यादिप्रसक्तिमाह—असमानाधिकरणं यस्येत्यादिना। एवं च प्रथमबहुव्रीहिविग्रहवाक्ये नञर्थभेदे समानपदार्थस्य प्रतियोगितयान्वय इति न भ्रमितव्यम्॥ किंतु अनुयोगितयैवेति द्वितीयबहुव्रीहिविग्रहवाक्यजन्यबोधे यादृशार्थो

व्याख्या।

पदार्थ। पौनरुक्त्यापत्तिरिति क्वचित्पाठः। भिन्नकर्तृकसम्बन्धेन लक्षणं मान्यद्‌-भेदेनोपन्यस्तो गम्भीर इति शेषः। स्वानधिकरणाधिकरणार्थकत्वमिति। असमानाधिकरणपदेन असमानमधिकरणं यस्य तदसमानाधिकरणमिति विग्रहे समानपदार्थस्याधेयतानिरूपकस्य भेदविशिष्टस्य नञर्थैकदेशे भेदेऽन्वयः। तथाचाधेयतानिरूपकभिन्नमसमानपदार्थः अधिकरणपदार्थमाधेयतानिरूपकं तदेकदेशाधेयतायां षष्ठ्यर्थयत्पदार्थस्य यन्निष्ठत्वसम्बन्धेनान्वयः तथाच यन्निष्ठाधेयतानिरूपकमाधेयतानिरूपकभिन्नमिति विग्रहवाक्यार्थः। यद्यप्यसमानपदेनाधेयतानिरूपकसामान्यभेदो न विवक्षितुं शक्योऽप्रसिद्धत्वात्। तथापि समानपदस्याधेयतानिरूपकस्य स्वादधिकरणविशेषभिन्नमेव तत्-पदेन विवक्षितमेतन्नामायैव स्वानधिकरणत्वस्य लाभ इत्युपात्तम्। समासे तु स्वाधिकरणरूपाधिकरणावृत्तित्वभिन्नाधिकरणत्वस्य लक्षणयाऽधिकरणपदार्थत्वात् समानपदं तात्पर्यग्राहकमिति स्वानधिकरणाधिकरणमसमानाधिकरणपदार्थः। तदधिकरणानधिकरणकत्वपरतयेति। असमानाधिकरणेत्यत्र नञ्-समासेन समानानधिकरणेति द्वन्द्वकल्पनया समानं न अधिकरणं यस्येति

दावव्याप्तेश्च । सत्त्वादेर्द्रव्यत्वाद्यनधिकरणाधिकरणकत्वाद्वृत्तस्तदधिकरणतया तत्पदं व्याचष्टे—यदधिकरणेति । यदधिकरणानधिकरणकं साध्यं तत्त्वानधिकरणत्वस्य व्याप्तित्वे, व्याप्तेर्विशिष्टैकार्थतानुपपत्त्या विशिष्टपरामर्शस्यानुमितिहेतुत्वानिर्वाहः । यत्पदतत्पदाननुगमेन सत्त्वाधिकरणत्वाभावघटस्य निवेशनीयतया गौरवञ्चेत्याशयेन य-

कृष्णभट्टीय ।

विषय सारस्वार्थपरतामाह । तद्धिकरणपरतयेति । सचार्थं यद्धिकरणत्वावच्छिन्नप्रतियोगिकभेदप्रतियोग्यधिकरणक साध्यमित्येवरूप । यत्तु न गर्दाशेन साध्य असमानाधिकरण यस्येत्यस्य साध्य यद्धिकरणावृत्तीत्यर्थं । तात्वानधिकरणत्व च लक्षण । तत्रच वह्निमात्रधूमादिस्थले वह्निमात्रस्य तत्र धूमाधिकरणावृत्तित्वाद्व्याप्तिरिति द्वितीयकल्पोऽप्यतारित । तत्रैतादृशार्थेव मैने किं बीज । न तावत् द्रव्य सत्त्वादिस्वादावतिव्याप्तिवारण । द्रव्यत्वस्य सत्ताधिकरणवृत्तित्वेनातिव्याप्ते । अपदार्थकल्पेन तदुद्धारस्यात्रानुपयोगात् । यदि तु साध्य यद्धिकरणसामान्यवृत्तिभिन्नमिति नार्थं किंतु यद्धिकरण यत्किञ्चिद्व्यक्तिवृत्तिभिन्नमिति, तदा तादृशव्याहतुद्धारेऽपि द्वितीयकल्पाभेद एवेत्यभिप्रेत्य स्वय द्वितीयकल्पोऽन्ययावतारित । स्वाधिकरणानधिकरणकसाध्य यत्पानधिकरणत्वरूपोऽनर्थ त्याह । यदितीति । अन्यथा व्यभिचारिण्यतिव्याप्ते ।

न्यायरत्न ।

व्युत्पत्तौ यदधिकरणमधिकरणविशेषनिरूपितमिति विग्रहवाक्यार्थ । समासवाक्ये यदधिकरणनिष्ठभेदप्रतियोग्यधिकरणवृत्तिलक्षणयोत्तरपदार्थ पूर्वपद तात्पर्यग्राहकमिति, तदधिकरणानधिकरणकमसमानाधिकरणपदार्थ इति कश्चित् । अस मानाधिकरणमित्यत्र न समानमधिकरण यस्य साध्यस्येति व्युत्पत्ति । तत्र च समानपदार्थ वैशिष्ट्याद्यधिकरणे यत्पदार्थसाध्याधिकरणभेदो विधेय । ननु समानपदार्थभेद साध्याधिकरणे विधेय इति नञ्व्यत्यास विनाऽयुक्तार्थलाभ इत्यन्ये । परेतु न समानमधिकरण यस्य साध्यस्येति व्युत्पत्तौ यत्पदार्थसाध्यस्य समानपदार्थऽधिकरणेऽन्वयस्तादृशाधिकरणविशेषितनञर्थभेदस्याधिकरणपदार्थ वैशिष्ट्याधिकरणत्वेऽन्वय इति स्वीकारान्नञ्व्यत्यास विनैव तादृशार्थलाभ इत्यम दीनि वदन्ति । यदधिकरणानधिकरणं साध्यं तत्त्वानधिकरणत्वस्य व्याप्तित्वेऽपीति । यद्यप्ययमर्थो न साध्यासमानाधिकरणत्वानधिकरणत्वमिति लक्षणवाक्यमात्रलभ्यते । किंतु साध्यमसमानाधिकरण यस्य तत्त्वानधिकरणत्वमिति विग्रहवाक्यमादेव । तथापि तस्य तादृशलक्षणवाक्यतात्पर्यविषयत्वाभासत इति । लक्षणवाक्यतात्पर्यविषयीभूतार्थस्यैव लक्षणत्वस्याभ्युपगमे लक्षणवाक्यजन्यशाब्दबोधविषयीभूतार्थस्तत्तल्लक्षणार्थाभिन्न इति हृदयम् । गौरवं चेति ।

धिकरणं साध्यं तत्त्वं, साध्यनिष्ठासामानाधिकरण्यप्रतियोगि-

---

त्वतत्त्वघटितसाध्यासामानाधिकरण्यपदार्थमाह—साध्यनिष्ठेति। साध्यनिष्ठं यदसामानाधिकरण्यं स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वाभावः। तत्प्रतियोगित्वं च तत्प्रतियोगिकोटिनिविष्टाधिकरणवत्त्वम्। साध्यनिष्ठाभावीयाधेयत्वनिष्ठप्रतियोगितायां निरूपितत्वसम्बन्धेन यदवच्छेदकं तद्वृत्तित्वमिति यावत्। वह्निमान्धूमादित्यादौ साध्यनिष्ठाभावो ह्रदाधेयत्वाभावस्तदीयप्रतियोगितायां निरूपितत्वं तत्सम्बन्धेनावच्छेदको ह्रदादिः। तद्व्यक्तिवृत्तित्वानधिकरणत्वं धूमादाविति लक्षणसमन्वयः। अत्र साध्यनिष्ठाभावप्रतियोग्याधेयत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्। अन्यथा वह्निमान्धूमादित्यादौ पर्वतादिसमवेतत्वाद्यभावमादायानुपपत्तेः। तथाच सत्त्वावान् सम-

कृष्णभट्टीय।

पदार्थमिति। साध्यासामानाधिकरण्ये शब्दे साध्ये असामानाधिकरण्य यस्येति व्युत्पत्त्यन्तराङ्गीकारेण भावप्रधाननिर्देशात्साध्यनिष्ठासामानाधिकरण्ये प्रतियोगित्वलाभ। इत्थं सत्त्वादित्यादेर्वारणाय यत्किञ्चिदिति। ननु प्रतियोगित्वसम्बन्धेन सामानाधिकरण्ये निरूपकत्वग्रहणे तत्राभावीय यथाय। असत्प्रतियोगिन्यस्य सामानाधिकरण्यमात्रनिष्ठतया अतिव्याप्ते र्गुर्वीनुमवश्यम्भावात आह। तत्प्रतियोगित्वं चेति। प्रतियोगियदकत्वेनाधिकरणोपादाने शिरोवेष्टनेन नासारपर्शरीतिभयेन तत्प्रतियोग्याधेयतानिरूपकत्वेन तदुपादेय। स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वप्रतियोगिकस्य रूपाभावविशेषस्य हेय। वैयर्थ्यात्। ननु सत्त्वुक्तत्वासत्त्वुक्तत्वोभयाभावप्रतियोगाधेयतानिरूपकतायाः पर्वतादौ सत्त्वादव्याप्तिरित्यतोऽवच्छेदकं च निय भवति। साध्येति। तादृशप्रतियोगितावच्छेदकस्य अयोगोलकवृत्तित्वे पर्याप्तत्वादव्याप्ति। हेतुतावच्छेदकसम्बन्धावच्छिन्नतद्वृत्तित्वविशेषो च

न्यायरत्न।

देवमुपलक्षणम्। अग्रेऽप्युक्तरीत्यापि द्रष्टव्या। साध्यनिष्ठेति। साध्येऽसामानाधिकरण्य स्वाधिकरणयत्किञ्चिद्व्यक्तिवृत्तित्वाभावो यस्य तत्साध्यासामानाधिकरण्यमिति व्युत्पत्त्या भावप्रधाननिर्देशात्साध्यनिष्ठासामानाधिकरण्यलाभ इति केचित्। असामानाधिकरण्यप्रतियोगिनस्य सामानाधिकरण्य एव सत्त्वाव्यभिचारिणि वह्न्यादिहेतुकेऽतिव्याप्तिरत आह—तत्प्रतियोगित्वं चेति। साध्येति। तादृशावच्छेदकत्वस्यायोगोलकवृत्तित्वे पर्याप्तत्वादव्याप्तित्तो

वायित्वादित्यादौ साध्यनिष्ठाभावीयसमवेतत्वनिष्ठप्रतियोगितावच्छेदकाधिकरणाप्रसिद्धेरव्याप्तिः । वह्निमान्धूमादित्यादावपि धूमादावयोगोलकीयवह्न्यादिनिष्ठपर्वतादिवृत्तित्वाभावप्रतियोगितावच्छेद-

कृष्णंभट्टीयं ।

असंभव इत्यतो निरूपितत्वसंबन्धेनेत्युक्तं । समवायित्वं । समवायानुयोगित्वं । स्वरूपसंबन्धेन हेतुः । अपररूपेऽपि हेतुतावच्छेदकसंबन्धेन दृष्यप्रसिद्धेः समवायेन हेतूपेक्षा । ननु समवेतत्वासमवेतत्वोभयाभावमादाय तादृशप्रतियोगिताप्रसिद्धेरधिकरणाप्रसिद्ध्यनुधावनं तादृशाभावप्रतियोगितावच्छेदकसत्ताया आधेयतासंबन्धेन सत्त्वेऽप्यधिकरणे तदृशत्वादिति । ननु साध्यनिष्ठाभावप्रतियोग्यनधिकरणमेव विवक्षणीयं तत्र साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नत्वेन प्रतियोगिताविशेषणान्न दोषः । तादृशेन व्यधिकरणेन सत्तायां सामान्याभावासंभवादित्यत आह—वह्निमानिति । अयोगोलकेति । अथ महानसीयवह्न्यादौ पर्वतवृत्तित्वाभावसत्त्वेनैवाव्याप्तेः सत्त्वादयःपिण्डीयवह्न्यनुधावनं व्यर्थम् । न च यद्रूपावच्छिन्नसामानाधिकरण्याभावः साध्यनिष्ठः तदन्यहेतुतावच्छेदकत्वं तदर्थ इति तत्सार्थक्यमिति वाच्यं । द्रव्यं सत्त्वादित्यादावतिव्याप्त्युपसंहारापत्तेः यद्रूपावच्छिन्नयत्किंचिद्व्यक्तिवृत्तित्वाभावविवक्षणे अयःपिण्डीयवह्न्यनुधावनवैयर्थ्यं तादवस्थ्यम् । मैवम् । यदि ह्रदादिवृत्तित्वाभावमादायातिव्याप्तेर्वारणाय यद्व्यक्तिवृत्तित्वाभावकूटवत्साध्यं तत्तद्व्यक्तिवृत्तित्वानधिकरणत्वं विवक्ष्यते तदा वह्निमान्धूमादित्यादौ यावन्ति हेतुमन्ति तत्तद्व्यक्तिवृत्तित्वाभावकूट-

न्यायरत्नं ।

निरूपितत्वसंबन्धेन यदवच्छेदकमिति । समवायित्वं समवायानुयोगित्वं स्वरूपसंबन्धेन हेतुः । साध्यतावच्छेदकसंबन्धावच्छिन्नत्वविलक्षणेऽपि समवायेन द्रव्यप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात्समवायेन हेतूपेक्षा । समवेतत्वासमवेतत्वोभयाभावमादाय तादृशप्रतियोगित्वप्रसिद्धेरवच्छेदकाधिकरणाप्रसिद्ध्युद्धावनम् । ननु साध्यनिष्ठाभावप्रतियोग्यनधिकरणत्वमेव विवक्षणीयम् । प्रतियोगिता च साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नत्वेन विशेषणीया । सत्ताया समवायावच्छिन्नाधेयतया व्यधिकरणसंबन्धेन सामान्याभावसंभवान्न दोषः । न च वह्न्यादौ संयोगावच्छिन्नाधेयतासंबन्धेन पर्वतह्रदोभयाभावमादाय तत्प्रतियोगितायाः पर्वते सत्त्वादव्याप्तिरिति वाच्यम् । व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताया विवक्षणीयत्वादत आह—वह्निमान्धूमादित्यादाविति । अयोगोलकीयेति । अथ महानसीयवह्न्यादौ पर्वतवृत्तित्वाभावसत्त्वादव्याप्तिसंभवेऽयोगोलकीयवह्निपर्यन्तानुधावने किं बीजमिति चेद्धूमवान्वह्नेरित्यादौ ह्रदादिवृत्तित्वाभावमादायातिव्याप्तेर्वारणाय यद्व्यक्तिवृत्तित्वाभाववत्साध्यं तत्तद्-

त्वम्, साध्यनिष्ठाधेयत्वनिरूपकाधिकरणवृत्तित्वमिति यावत् ।

---

कपर्वतादिवृत्तित्वादव्याप्तिः । साध्यतावच्छेदकव्यापकीभूततदभाव-
निवेशे गौरवमित्याशयेन फलितार्थमाह—साध्यनिष्ठाधेयत्व-

कृष्णंभट्टीयं ।

त्वापि संभवमाविष्कर्तुं अपःपिण्डीयपक्षद्वयानुधावनात् । संख्यावात्परिमा-
णादित्यादौ यत्किंचिद्द्रव्यत्वेन तद्वृत्तित्वाभावघटितकूटमादायाव्याप्तेः सत्त्वेऽपि
न क्षतिः । विषमव्याप्तेति वदतां तर्कालंकाराणामेव स्वरसतः । वस्तुतस्तु
साध्यनिष्ठो यद्रूपावच्छिन्नसामानाधिकरण्याभाव इत्येव साध्यनिष्ठासा-
मानाधिकरण्ये प्रतियोगित्वमिति दीधित्यर्थः । तत्र साध्यसामानाधिकर-
ण्येत्यादिलक्षणे प्रथमत एव द्रव्यं सत्त्वादित्यादावतिव्याप्तिः शङ्किता । तत्वा-
श्रयमनिष्कर्षेणैव वाक्यं मध्यापोक्षाव्याप्तिवारका एवेति यथाश्रुतसंदर्भः ।
तदनुरम्भामानामय पिण्डीयपक्षेऽनुधावनं संगच्छत एव । एवंच व्यधिक-
रणयद्धर्मीहित्वसाध्यसामानाधिकरण्ये शब्दार्थस्य द्रव्यं सत्त्वादित्यादाव-
तिव्यापकतया अतिप्रसक्तत्वमालोच्योक्ततद्वारकप्रकारस्य विषमव्याप्ते
पर्वतीयादिवह्नौ महानसादिवृत्तित्वाभावमादाय समव्याप्ते धाम्याप्तौ न
कश्चिद्विरोधः । नच सामानाधिकरण्यस्याव्याप्यवृत्तित्वमतानवलम्बय द्रव्यं
सत्त्वादित्यादावतिव्याप्तिः कुतो न शङ्कित इति वाच्यं । संख्यावात्परिमाणा-
दित्यादिसमव्यापके क्रियाद्यवच्छेदेन साध्ये सामानाधिकरण्याद्यभावमादा-
याव्याप्तेः । साध्याधिकरणावच्छेदकविशेषणदाने च द्रव्यं सत्त्वादित्यादाव-
तिव्याप्तेः द्रव्यत्वाधिकरणावच्छेदकत्वोक्तौ द्रव्यं गगनघटत्वान्यतरत्वादित्यादौ
घटत्वादेः साध्यासंबन्धित्वेनानवच्छेदकत्वेनातिव्याप्तेः तदव्याप्यवृत्तित्वमता-
नभिमतत्वाच्च । साध्यतावच्छेदकव्यापकेति । सर्वत्र सत्तावान्सम-
वायसत्त्वादित्यादावव्याप्तिर्नोद्धृतैव आधेयतासंबन्धावच्छिन्नाधिकरणाभावस्य
वृत्त्यनियामकसंबन्धावच्छिन्नप्रतियोगिताकत्वेनाप्रसिध्या निवेशासंभवादिति
वैसर्हि साध्यतावच्छेदकसंबन्धान्यसाध्यप्रतियोगिकसंबन्धान्यसंबन्धावच्छि
न्नत्वं आधेयतायां निवेशनीयं । नन्वेवं वह्निमान्धूमादित्यादौ वह्नौ स्वरू-
पसंबन्धावच्छिन्नपर्वतवृत्तित्वसंयोगसंबन्धावच्छिन्नपर्वतवृत्तित्वोभयाभाव-
स्य स्वरूपसंबन्धावच्छिन्नपर्वतवृत्तित्वाभावस्य च सत्त्वादव्याप्तिः । नच
तत्प्रतियोगितावच्छेदककोटावाधेयतात्वस्याप्यन्तर्भाव. । अन्यथा वह्नौ संयो-
गसंबन्धावच्छिन्नपर्वतवृत्तित्वसत्त्वेन तदभावदौर्लभ्यापातात् । तदन्तर्भावे
च समानाधिकरणमात्रे तादृशसंबन्धेनावच्छेदकपर्याप्तिरित्येतादृशाभावो न
लक्षणघटक इति वाच्यं । अधिकरणमात्रे निरूपकतासंबन्धेन अवच्छेदकप-
र्याप्तेः सकलमतसिद्धत्वात् । अन्यथा वह्निप्रकारकप्रमाविशेष्यत्वादौ ताद-

मिति । अनिरूपकत्वमिह साध्यनिष्ठाधेयतात्वावच्छेदेन ग्राह्यम् । तेन वह्निमान्धूमादित्यादौ महानसादेः पर्वतीयवह्निनिष्ठाधेयत्वानि-

कृष्णभट्टीय ।

साभावदशायामव्याप्त्यापातादिति । मैवम् । तादृशाधेयतासामान्यवृत्तिप्रतियोगिताकत्वनिवेशेनादोषात् । एवञ्च जलतादिकाया अयोगोलकीयवह्न्यादिवृत्तिपर्वतवृत्तित्वाभावशब्देनाप्येवम्भते साध्यतावच्छेदकान्यसाध्यप्रतियोगिकान्यसम्बन्धावच्छिन्नतत्त्ववृत्तित्वप्रतियोगिकाभावस्यैवाभिमतत्वान्न तद्विरोधः । अस्तु तस्तु घटत्वान् घटादित्यादौ समवायसंबन्धेन साध्यतायाः समवायान्यसाध्यप्रतियोगिकसंबन्धान्यसम्बन्धः समवायसंबन्ध एव तदवच्छिन्नसामान्यवृत्तित्वमप्रसिद्धमेवेति गोचरीत्या आधेयताविशेषणं सम्यक् । किंतु साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमेव । तथाच समवायेन समवायादित्यादौ अव्याप्तिमनुसृत्यैव वह्निमानित्यादिना दूषणान्तरारोपगौरवमित्यन्तग्रन्थ इत्येव सम्यक् । पूर्वं बहुव्रीहिविग्रहवाक्यजन्यबोधविषयस्य साध्यवदधिकरणानुयोगिकभेदप्रतियोग्यधिकरणमित्येवरूपस्य प्रदर्शनानन्तरं समासान्तरलभ्यार्थं प्रदर्श्य पूर्वबहुव्रीहिघटकं पुनः स्वीकृत्य साध्यनिष्ठेत्यादिनाङ्गीकृतम् । इदं तु बोध्यम् । पूर्वबहुव्रीहिणा तत्साध्यासामानाधिकरण्यशब्दस्य साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमेवार्थं । आद्यो विग्रहार्थो तृतीयः समानाधिकरणार्थश्च परमत्वपार्थं ममु लक्षणघटक इति बोध्यं । अनिरूपकत्वं अनिरूपकत्वप्रतियोगिनिरूपकत्वं । आधेयतात्वावच्छेदेन आधेयतात्वव्यापक । तथाच साध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितवृत्तित्वानधिकरणत्वमिति निष्कर्षः । नच आधेयतात्व आधेयतायामेव । पर्वताधिकरणतारूपनिरूपकत्वस्य पर्वतादाधेयेति वैयधिकरण्यात्कथं व्यापकत्वमिति वाच्यं । स्वाश्रयाधेयत्वाश्रयत्वसम्बन्धेन आधेयतात्वस्य व्यापक,

न्यायरत्न ।

त्वानधिकरणत्व यदि विवक्ष्यते, तदा वह्निमान्धूमादित्यादौ यावन्ति हेतुमन्ति तत्तद्व्यक्तिघटितलक्षणघटकमपि सम्भवतीति ज्ञापयितुमित्यवेहि । मू० साध्य निष्ठाधेयत्वेति । वह्न्यव्याप्यत्वघटितधर्मितावच्छेदकधर्मावच्छिन्नाधेयता अधिकरणभेदो भिन्नैव नतु सावच्छेदकधर्मान्तरेऽधिकरणभेदेऽप्यभिन्नेति मतानुसरणाद्वह्निनिष्ठसंयोगसम्बन्धावच्छिन्नाधेयतानिरूपकाधिकरणे गुणादौ हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्ध्या वह्निमान्-धूमादित्यादावव्याप्तिरिति पूर्वपक्षतात्पर्य इति ध्येयम् । दर्शितादिशाऽधेयताभेदेऽपि यत्किंचिदाधेयतानिरूपकत्वाभावमादाय प्रसक्तामव्याप्तिशङ्का साध्यनिष्ठाधेयतात्वरूपसामान्यधर्मपुरस्कारेण साध्यनिष्ठाधेयताया अनिरूपकत्वान्तविशेषणघटकता । ननु यत्किंचिदाधेयताभावेनेति दीधित्याशयं प्रस्फुटयन्नाशयति । अनिरूपकत्वमिहेति । अनिरूपकत्वान्त विशेषणघटकाधेयत्वमित्यर्थः । आधेयतात्वावच्छेदेनेति । साध्यनिष्ठाधेय-

रूपकत्वेनाव्याप्तिः। एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाधेयता निवेशनीया। तेन अयमात्मा आत्ममहाकालान्यतरत्वादित्यादौ कालस्य कालिकसम्बन्धावच्छिन्नात्मत्वादिनिष्ठाधेयत्वादिनिरूपकत्वे-

कृष्णभट्टीय।

स्वनिरूपितवृत्तित्वसम्बन्धेन स्वनिरूपकस्य व्यापकत्वमिति वह्न्यादिरूपसाध्यान्तर्भावेन व्यापकत्वोपपत्तेः। नच साध्यनिष्ठाधेयतात्वस्य द्रव्यत्वावच्छिन्नाधेयतासाधारणस्य निरुक्तसम्बन्धेन जले स्वरूपसम्बन्धेन वह्न्यधिकरणत्वस्वरूपनिरूपकत्वासम्भव। यदि च द्रव्यत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्वरूपस्य गुणादिसाधारणनिरूपकत्वस्य तादृशाधेयतात्वव्यापकतया गुणादेरेव तदवच्छिन्नप्रतियोगिताकभेदवत्त्वेन नाव्याप्तिः, तदा तुल्ययुक्त्या धूमवान् वह्नेरित्यादावतिव्याप्तिरिति वाच्यम्। आधेयतात्वव्याप्यत्वस्यापि निरूपकतायां निवेश्यत्वात्। आधेयतात्वव्याप्यत्वं च साध्यानुयोगिकत्वविशिष्टस्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकाधेयताभाववति स्वनिरूपितवृत्तित्वसम्बन्धेनावृत्तित्वं स्वाश्रयनिरूपिताधेयताभेदो यत्र समानाधिकरणद्रव्यान्तराप्यात्वान्यत्वभङ्गप्रसङ्ग। नचैवमपि वह्निमान् धूमादित्यादावव्याप्तिः। वह्न्यधिकरणपर्वतमात्रनिष्ठवह्न्यधिकरणतारूपनिरूपकतायाः वह्निनिष्ठकालादिसाधारणद्रव्यत्वावच्छिन्नाधेयतात्वव्यापकत्वासम्भवात्। द्रव्यत्वावच्छिन्ननिरूपकतायाश्च तादृशाधेयतात्वव्याप्यत्वादिति वाच्यम्। साध्यानुयोगिकत्वविशिष्टस्वाश्रयाश्रयत्वसम्बन्धेन साध्यनिष्ठाधेयतात्वाधिकरणनिष्ठाभावप्रतियोगित्वरूपतादृशाधेयतात्वव्यापकत्वनिवेशात्। अथैवमभावे साध्यतावच्छेदकव्यापकत्वनिवेशे गौरवाभिधानमसङ्गतम्। ननु येनत्वगवत्वमपेक्ष्यप्रकाशनात्। अत्रेद समाधानमाकलयामहे। सूक्ष्मदृश्याधेयताविशेषाभावस्य साध्यतावच्छेदकव्यापकत्वादव्याप्तिः। नच निरूपकतासम्बन्धेन अधिकरणवदभाव प्रवेश्य इति वाच्य। तथासति संयुक्तसमवेतयोः निरूपकतायाः एकजातीयत्वेन आधेयतायां साध्यतावच्छेदक

व्याप्तिरत्न।

तात्वरूपसामान्यधर्मावच्छेदितप्रकारत्वमिति केचित्। परे तु यदाधेयतावच्छेदकभेदेनैवाधेयत्वनिरूपकत्वयोर्भेदस्तदाऽनिरूपकत्वम्। अनिरूपकत्वप्रतियोगिनिरूपकत्वम्। आधेयतात्वावच्छेदेन आधेयतात्वव्यापकम्। तथाच साध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नभेदो निवेश्य इति पर्यवसितम्। अत्र व्याप्यत्वं स्वाश्रयाश्रयत्वसम्बन्धेन व्यापकत्वं तु स्वनिरूपिताधेयतावत्त्वसम्बन्धेन आत्मते नाधेयतात्वनिरूपकत्वयोर्नैयधिकरण्येऽपि न क्षतिः। नच धूमवान् वह्न्यधिकरणत्वादित्यादौ द्रव्यत्वावच्छिन्नाधेयतासाधारणसाध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नभेदस्य गुणादावेव सत्त्वादतिव्याप्तिरिति वाच्यम्। तादृ

कृष्णंभट्टीयं ।

संबन्धावच्छिन्नत्वविशेषणवैयर्थ्यात् । साध्यतावच्छेदकतदितरसंबन्धावच्छिन्नाधेयतयोर्व्यभिचारनिरूपकाधिकरणवत्त्वसत्त्वेन तदभावस्य साध्ये सत्त्वेनानिव्याप्तेश्च । तद्वन्निरूपकतात्वेन संसर्गत्वं तु विशेषरूपेण संबन्धतापत्तिपराहतं । नच साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतात्वावच्छिन्नत्वं प्रतियोगिताविशेषणमिति वाच्यं । एवमपि पूर्वक्षणवृत्तित्वविशिष्टपर्वतसंयुक्तत्वाभावमादायाव्याप्तेः । नच भावेऽव्याप्यवृत्तित्वं निरवच्छिन्नत्वविशेषणतासंबन्धेन व्यापकत्वं वा निवेश्यमिति वाच्यं । एवमपि घटध्वंससंयुक्तत्वोभयाभावावारणात् । नच प्रतियोगिवैयधिकरण्याघटितसाध्यतावच्छेदकव्यापकत्वोपादानानुक्ताभावद्वयनिरास इति वाच्यं । तथापि निरवच्छिन्नपर्वतसंयुक्तत्वोभयाभावावारणात् । तस्य केवलान्वयित्वेन तदभावासत्त्वादिति । नच तदवारणेऽपि न क्षतिः । पर्याप्तिसंबन्धेन तदवच्छेदकताया उभयत्रैव सत्त्वात् । तदुभयावृत्तित्वस्य धूमे संभवेनाव्याप्त्यसत्त्वादिति वाच्यं । उभये पर्याप्तेः प्रत्येकपर्याप्तिनियतत्वात् । अतः साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतासामान्यवृत्तित्वं प्रतियोगिताविशेषणमावश्यकं । तथाच तदवच्छेदकताघटकनिरूपकत्वरूपसंबन्धनिरूपकतात्वसंबन्धावच्छिन्नाधेयतात्वव्यापकत्वमिति नामेभयः । स्वप्रतियोग्यसमानाधिकरण्यस्याभावविशेषणमिति पूर्वक्षणवृत्तित्वविशिष्टपर्वतसंयुक्तत्वाद्यभावनिरासः । तथापि साध्यनिष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदकव्यापकत्वमिति व्यापकतावच्छेदकत्वेऽप्यधिकविशेषणसार्थक्याभासत्वंगनिरनुपादेयैवेति कृतबुद्धयो विदांकुर्वन्तु । अत्रेदं बोध्यं । ननु नियमनिवेश तत्र परंपराभेदानां संबन्धत्वं चापेक्ष्य द्रव्यत्वावच्छिन्नाधेयतावारणाय साध्यतावच्छेदकव्याप्ये धर्मान्तरावच्छिन्नत्वान्यनिष्ठाधेयतान्तरनिरूप्यवृत्तितानिरूपकाधेयताकत्वं साध्यनिष्ठाधेयताविशेषणं समवायित्वावच्छिन्नाधेयतामादायाव्याप्तिवारणायावच्छिन्नान्तमन्तरविशेषणं । एतद्रूपादिसाध्यके तत्तत्क्षणावच्छिन्ने तद्रूपत्वावच्छिन्नाधेयताया एव प्रसिद्धिः । साध्यनिष्ठाधेयतावच्छेदकभेदस्याप्यत्र तात्पर्यम् । साध्यनिष्ठतादृशाधेयतानिरूपकत्वसामान्याभावश्च निवेश्यः । अथवा साध्यतावच्छेदकसमनियताधेयतैव निवेश्या । भङ्गीभेदमात्रमेव लघुतरेऽप्याभासप्रकारे यथाश्रुतदीधित्यनुसारेण गौरवाभिधानम् । अथवा साध्यनिष्ठाधेयतायां साध्यतावच्छेदकावच्छिन्नाधेयतान्यत्वं, साध्यनिष्ठाधेयतावच्छेदकभेदेनैतत्सम्यम् । अवच्छेदकानवच्छिन्नत्वस्य पर्याप्त्यनुपादानात्संबन्धावच्छिन्नाधेयतायाः साध्यतावच्छेदकावच्छिन्नतया क्वचिद्व्यभिचारिणीति पद्धिसंगतिः । तदतिव्याप्तिवारणाय पर्याप्त्युपादानेतु नन्वयवैयर्थ्यं । साध्यतावच्छेदकावच्छिन्नत्वोपादाने नायं दोष इत्यस्मिन्ग्रन्थसङ्गतिः । नच साध्यतावच्छेदकावच्छिन्नाधेयताया उपादानेऽपि पर्याप्त्युपादानानुपादानाभ्यां पद्धिग्रन्थौ संगच्छेते एवेति वाच्यम् । तथासति साध्यनिष्ठपरिच्छेदकतासंयोगोद्भवता-

स्थानिरूपकत्वात्तद्वृत्तौ नातिप्रसंगः । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्व-

---

अत्राधिकरणवृत्तित्वं हेतुतावच्छेदकसंबन्धेन वाच्यम् । अन्यथा वह्निमान्धूमादित्यादौ वह्न्यादिनिष्ठाधेयत्वानिरूपकस्यावयवादौ धूमादेः समवायेन वृत्तेरव्याप्त्यापत्तेः । इत्थंच सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः । साध्यनिष्ठाधेयत्वानिरूपकत्वाधिकरणे सामान्यादौ हेतुतावच्छेदकसंबन्धात्मकसमवायादिना वृत्तेरप्रसिद्धेः । एवं द्रव्यं विशिष्टसत्त्वादित्यादावपि विशिष्टसत्त्वादेः सत्ताद्यनतिरिक्ततया साध्यनिष्ठाधेयतानिरूपकाधिकरणगुणादिवृत्तित्वानधिकरणत्वासंभवादव्याप्तिरित्यतो निष्कृष्टार्थमाह—साध्यनिष्ठेति । अत्रापि पूर्वदोषवारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नत्वेनाधेयत्वं निवेशनीयम् । एवमधिकरणत्वमप्यविवक्षितम् । तादृशाधेयत्वानिरूपकत्वव्यापकतैवाभावे निवेशनीया तादृशाधेयत्वानिरूपकवृत्तित्वमात्रनिवेशे धूमवान्वह्नेरित्यादौ वह्न्यधिकरणतासामान्याभावस्य धूमनिष्ठाधेयत्वानिरूपकह्रदादिवृत्तित्वादतिव्याप्तिरतो व्यापकतानिवेशः । व्यापकत्वं तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं न तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम् । सर्वस्यैव तथाविधवृत्तित्वावच्छिन्नाभावप्रतियोगितया तदप्रसिद्धेः । नवा तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तादृशाभावप्रतियोगितावच्छेदकीभूताभावत्वादिकमादाय वह्न्यधिकरणत्वसामान्याभावस्यापि धूमानधिकरणत्वव्यापकतया अतिव्याप्त्यापत्तेः । अनवच्छेदकत्वं चावच्छेदकताप-

कृष्णभट्टीयं ।

णाधिकरणनिष्ठनिरूपकत्वलाभार्थं । सच तादृशाधेयत्वानिरूपके यदधिकरणमिति योजनयेति । तत्तुच्छतरं । अधिकरणतासाधारणनिरूपकत्वस्य लाभे मानाभावात् । विशिष्याधिकरणनिष्ठनिरूपकत्वविशेषस्यैव स्वघटकत्वात् । अन्यथा अधिकरणपदपूरणापत्तेः । नच तादृशनिरूपकभेदघटितलाभार्थमधिकरणपदमिति युज्यते तल्लाभस्य नञ्समासाधीनत्वात् । नापि अधिकरणपदार्थतावच्छेदकाधिकरणत्वे साध्यनिष्ठाधेयत्वानिरूपकत्वान्वयार्थमधिकरणपदं । असंभवापत्तेः । साध्यवद्भिन्नत्वेनेति पद्यौ कथनमुत्तरलक्षणेऽतिव्याप्तिनिरासपूर्वकं ।

यांश्यनधिकरणत्वम् । अत उभयत्रच्छेदमादाय न दोषः । अथवा यदधिकरणसामान्याभाववत्त्वं साध्यनिष्ठाधेयतानिरूपकवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्वमेव समुदायार्थः । अतो अभावत्वादिना व्यापकतामादाय न दोषः । अधिकरणता च हेतुतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । तेन वह्निमान्धूमादित्यादौ वह्न्यधिकरणधूमावयवादौ धूमाधिकरणत्वसामान्याभावासत्त्वेऽपि न क्षतिः । धूमवान्वह्नेरित्यादौ यत्किंचिद्वह्न्यधिकरणत्वाभावस्य धूमानधिकरणत्वव्यापकतयाऽतिव्याप्तिवारणाय सामान्यपदम् । तथा च तादृशाधेयत्वानिरूपकत्वव्यापकाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नाधिकरणतात्वं, यद्रूपावच्छिन्नाधिकरणतात्वावच्छिन्नाभावत्वं वा तादृशानिरूपकत्वव्यापकतावच्छेदकं तद्रूपत्वमिति फलि-

कृष्णंभट्टीयं ।

समवायेनेति । वह्निकालिकसंबन्धेन वृत्तित्वोक्तौ चातिव्याप्तिर्दुष्परा । हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतासंबन्धेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाभावस्य हेतुतावच्छेदकसंबन्धान्यहेतुप्रतियोगिकसंबन्धान्यसंबन्धावच्छिन्नतावच्छिन्नवृत्तिकाभावस्य वा निवेशो वाद—एवमिति । व्यापकत्वं चेति भेदव्यभिचारोपाधिरिति न प्रतियोगितावच्छेदकसंबन्धनिवेशः । अवच्छेदकत्वं स्वरूपसंबन्धेन निवेश्यं तेन हेत्वधिकरणत्वाभावस्य विषयितासंबन्धेनावच्छेदकत्वेऽपि नाव्याप्तिः । तद्घटोत्कर्षभेदवान् सर्वदण्डादित्यादौ [illegible] हेत्वधिकरणत्वाभावत्वविशिष्टरूपवत्त्वादेः साध्यनिष्ठाधेयत्वानिरूपकत्वव्यापकतयाऽव्याप्तिः । अतो हेत्वधिकरणत्वाभावत्वविशिष्टं स्वरूपसंबन्धेन विशेष्यमिति तु न शङ्क्यम् । तथापि हेत्वधिकरणत्वाभावस्याव्यापकत्वात् । ननु एतद्दृष्टत्ववान् कपिसंयोगादित्यादौ हेत्वधिकरणत्वाभावादेः केवलान्वयित्वादव्याप्तिरित्यत आह । अथचेति । इदं तु बोध्यं । तत्तमाधिकरणभेदप्रतियोगितानिरूपितनिरवच्छिन्नविशेषणतासंबन्धावच्छिन्नावच्छेदकताशून्यत्वे सति निरवच्छिन्नवृत्तित्वं व्यापकत्वम् । निरवच्छिन्नवृत्तित्वोपादानात्स्वप्रकाशविषयत्वरूपव्यभिचारिहेत्वधिकरणत्वाभावस्य निरुक्तव्यापकत्वेऽपि न क्षतिः । व्यापकीभूताभावप्रतियोग्यधिकरणतानिवेशस्थाने व्यापकीभूतभेदप्रतियोगितावच्छेदकाधिकरणतानिवेशो वा । तथा चात्यन्ताभावघटितव्यापकत्वपरिष्कारोऽप्यावश्य इति । हेत्वधिकरणता व्यापकप्रतियोगिताकत्व निरस्यति । तथा चेति । तादृशेति । व्यापकाभावप्रतियोगितायामधिकरणतानिष्ठायां निरूपकतासम्बन्धेनावच्छेदकतायाः अवच्छेदकहेतुताव-

तोऽर्थः । तेन धूमानधिकरणत्वव्यापकीभूतवह्न्यनधिकरणत्वधूमाधिकरणत्वोभयसामान्याभावप्रतियोगितया वह्न्यनधिकरणत्वसामान्यनिष्ठत्वेऽपि नातिव्याप्तिः । यदधिकरणतामात्रनिवेशे द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः । द्रव्यत्वानधिकरणगुणादौ हेत्वधिकरणतात्वावच्छिन्नाभावसत्त्वात् । अतो यद्रूपावच्छिन्नेति । हेत्वभावस्य व्यापकतानिवेशे व्यापकताशरीरे हेतुतावच्छेदकसम्बन्धेन तद्वन्निष्ठत्वं निवेश्यम् । अन्यथा वह्निमान्धूमादित्यादौ साध्यनिष्ठाधेयतानिरूपकह्रदादौ धूमात्मकाभावस्य कालिकसम्बन्धेन वृत्तेरव्याप्त्यापत्तेः । तथासति सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः । साध्यनिष्ठाधेयतानिरूपकाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेः । अतो हेत्वधिकरणत्वाभावस्य व्यापकताघटितमेव लक्षणं कृतम् । तथाचाधिकरणताया विशेषणताविशेषेण वृत्तिमत्तया तेन सम्बन्धेन तन्निष्ठत्वं निवेश्य, अतो न दोषः । पूर्वकल्पपरित्यागे बीज-

कृष्णम्भट्टीय ।

च्छेदकभेदस्य साध्यतया विशिष्टपरामर्शानुपपत्ति । यद्रूपेति । यद्रूपावच्छिन्नाधिकरणताप्रतियोगिकाभावस्य वह्न्यधिकरणत्वधूमोभयाभावाधिकरणतयाऽतिव्याप्ति । तदवच्छिन्नाभावामात्रनिवेशस्तथा नोक्तम् । तादृशनिरूपकाधिकरणवृत्त्यभावप्रतियोगितायाः स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनावच्छेदकीभूताधिकरणतानिरूपकतावच्छेदक स्वावच्छिन्नाधिकरणताकत्वसम्बन्धेन अवच्छेदक वा यद्धेतुतावच्छेदक तद्रूपवत्त्वेऽपि न विशिष्टपरामर्शानुपपत्ति । हेत्वभावस्येति । स्वविशिष्टवृत्त्यनियामकसम्बन्धेन हेतुतात्र धनादिसम्बन्धस्य व्याप्यतयैवोपपत्ते । वह्न्यादे साध्यताया रूपादेः संयोगेन हेतुताया व्याप्त्युपगमेऽपि न क्षति । तत्र पक्षधर्मताविरहादेव एतावताप्रमात्वसम्भवादिति मात्र । हेत्वभावे प्रतियोगिवैयधिकरण्यागन्वेन व्याप्यतावच्छेदकाभावस्य हेतुमत्त्वाग्रहविरोधितानियामकसम्बन्धावच्छिन्नप्रतियोगितानिवेशोऽप्याह । अन्यथेति । कृतमिति । अधिकरणताचेह न सम्ब

न्यायरत्न ।

न्धेन साध्यनिष्ठत्वादिघटकस्याप्यन्वयं तात्पर्यमिति वदन्ति । अव्याप्यवृत्त्यधिकरणताया अव्याप्यवृत्तिसमवेऽव्याप्यवृत्तिव्यभिचारिण्यतिव्याप्तिरभावे प्रतियोगिव्यधिकरणत्वादिनिवेशे गौरवमित्यालोच्याह—अथवेति । अप्रसिद्धेरतो हेत्वधिकरणत्वाभावस्येति । एतेन वृत्त्यनियामकेन व्यधिकरणेन वा सम्बन्धेन हेतुतावच्छेदकेऽव्याप्तिरतिव्याप्तिर्वा वारणमधिकरणत्वनिवेशनप्रयोजनमिति

मिति निष्कर्षः। तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः। साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणत्वम्। चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तमपहाय स्वयमेकोक्त्यानुध्य दूष-

---

माह—तेनेति। न दोष इति। सामान्यादौ हेतुतावच्छेदकसंबन्धेन वृत्तेरप्रसिद्धावपि तत्सम्बन्धावच्छिन्नायाः द्रव्यत्वाधिकरणतायाः द्रव्ये प्रसिद्धाया अभावस्य साध्यानधिकरणत्वादिति भावः। इति सिंहव्याघ्रलक्षणयोः प्रथमलक्षणं समाप्तम्।

अथ सिंहव्याघ्रलक्षणयोः द्वितीयलक्षणम्। साध्यवैयधिकरण्यस्य निरुक्तार्थकत्वे पौनरुक्त्यापत्तेस्तद्व्याचष्टे। साध्येति। इति सिंहव्याघ्रलक्षणयोः द्वितीयलक्षणं समाप्तम्॥

कृष्णंभट्टीयं।

नियमा। तादात्म्यसंबन्धेन साध्यतायामिव तादात्म्येन साधनतायामपि व्याप्यत्वस्वीकारात्। इति सिंहव्याघ्रलक्षणयोः प्रथमलक्षणं समाप्तम्।

(अथ सिंहव्याघ्रलक्षणे द्वितीयलक्षणम्।) निरुक्तार्थकत्वमिति। साध्यं व्यधिकरणं यस्येति विग्रहः। व्यधिकरणमिति बहुव्रीहिरूपोत्तरपदघटित.। तत्र विभिन्नं अधिकरणमित्रं आधेयतानिरूपकभिन्नं अधिकरणं यस्येति विग्रहात् यत्राधेयतानिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणं प्रतीयते। व्यधिकरणमिति समासात्तु अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकीभूतनिरूपकत्वाकाधेयताभावात् लुप्यत इति। दोषमभिसन्धाय प्रदत्तम्। साध्येतीति। विभिन्नमधिकरणं यस्य तत् व्यधिकरणं तस्य भावस्तत् साध्याद्वैयधिकरण्यं साध्यवैयधिकरण्यम्। साध्यपदस्य साध्याधिकरणे लक्षणेति साध्यानधिकरणवृत्तित्वलाभः। इति सिंहव्याघ्रलक्षणयोः द्वितीयलक्षणं समाप्तम्।

न्यायरत्नं।

वर्णयन्तो यमदीना परास्ता। यत्स्वकीयाव्याप्तिवारणाय व्यापकत्वघटितपरिष्कारारम्भस्तत्र महामान् द्रव्यत्वादिसाध्यानधिकरणत्वांशनिष्प्रयोजनसमये तदुपेक्षया निर्दोषत्वादिति ध्येयम्। इति सिंहव्याघ्रप्रथमद्वितीयलक्षणे समाप्ते॥

**यति—तदुभयमपीति । साध्येत्यादेः, साध्यं यदधिकरणा-**

---

ननु मूले तदुभयमपि साध्यानधिकरणानधिकरणत्वमित्यनेनोक्तलक्षणद्वयानुवादोऽसङ्गतः। असामानाधिकरण्यवैयधिकरण्ययोरधिकरणताद्वयघटितत्वेन तादृशलक्षणयोरधिकरणतात्रयघटितत्वादनुवादे चाधिकरणताद्वयमात्रस्य निवेशादित्यतस्तादृशमूलं सङ्गमयति—चरमेति । अन्तवीति । अनधिकरणत्वस्याधिकरणत्वाभावरूपतया तद्घटकाधिकरणत्वांशं परित्यज्य साध्यासामानाधिकरण्याभाववैयधिकरण्याभावनिवेशेनैवोपपत्तेरिति भावः । असामानाधिकरण्याद्यधिकरणत्वाभावस्याखण्डस्यासामानाधिकरण्याद्यभावाघटिततया ॥ वैयर्थ्यमित्यनतिप्रयोजनकनयेत्युक्तम् । तदपहाय चरमाधिकरणत्वांशं परित्यज्य । द्वयम् साध्यासामानाधिकरण्याभावसाध्यवैयधिकरण्याभावरूपनिष्कृष्टलक्षणार्थद्वयम् । साध्यानधिकरणाधिकरणत्वमित्यनेन सत्तावान् द्रव्यत्वादित्यादौ अव्याप्तिवारणाय विवक्षितस्य प्रथमलक्षणनिष्कृष्टार्थस्य कथंचिदपि प्रतिपादनासंभवात्तदनुवादकतानुपपत्ते(त्तिरि)ति यथाश्रुतार्थोऽनुवादपरतया सङ्गमयितुं अनुवदनीयलक्षणार्थद्वयमाह—साध्येत्यादेरिति । लक्षणद्वयस्य क्रमेणेति

कृष्णंभट्टीयं ।

[ अथ सिद्धव्याप्तिलक्षणदूषणम् । ] दीधितौ एकोक्त्येत्यनेन तदुभयमपि तदुभयशब्दप्रतिपाद्यमपि साध्यानधिकरणानधिकरणत्वशब्दप्रतिपाद्यमित्यर्थात्तदनुवादत्वलाभः। नचानुवादार्थदूषणेऽपि पुरोवादार्थो निर्दिष्ट एवेति वाच्यम् । समनियतानुवादार्थमुखस्य पुरोवादार्थमुखानन्यत्वात् । प्रथमलक्षणेति । साध्यानधिकरणं अनधिकरणं यस्येति विग्रहः । येन यथा असाध्यानि साध्यविरोधीनीति पूर्वपदार्थतावच्छेदकसाध्यविरोधव्यापकत्वलाभः । तथेहापि साध्यवच्छेदव्यापकत्वलाभ आशङ्क्येत । तथासति अनधिकरणमिति प्राथमिकसमासासंभवादित्यनेन । विरोधात् । किंतु साध्यानधिक-

व्याकरणं ।

[ अथ सिद्धव्याप्तिलक्षणदूषणम् । ] पूर्वनिपातितस्यैव नञ इति । अत्र यथाश्रुततामात्रार्थकेन नञा उत्तरपदार्थाभावे विद्यमानं यदव्ययं तत्समस्त

---

१ मै. पु. अ.

मद्रा. प. ११

श्लेषः । सत्त्वाभाव इत्यन्तेन प्रथमलक्षणार्थकथनम् । एवञ्च साध्याधिकरणानधिकरणशब्देन साध्य यदधिकरणानधिकरणकं तद्बोध्यते । तदुत्तरत्वप्रत्ययेन तत्त्व साध्यपदोत्तरसन्निविष्टनञा तदभावः प्रत्याय्यत इति प्रथमलक्षणार्थबोधकत्वं साध्यानधिकरणानधिकरणत्वमित्यस्य । नच साध्याधिकरणानधिकरणत्वपदेन नञ्समासे सत्येव

कृष्णभट्टीय ।

रणमधिकरणं यस्येत्यनेन । नञ्चरमपि पञ्चाशन्मत्समासे वक्ष्यमाणरीत्या नञ्साध्यनिवेशाधिकरणत्वाभावलाभ सम्भवति । नञो मध्यनिवेशेऽपि भावप्रत्ययान्तबहुव्रीह्यर्थीभूततथाविधाधेयत्वेनैव तदन्वयात् । नत्वधिकरणतया । नञो यद्धर्मावच्छिन्नोपस्थापकपदसमभिव्याहारस्तद्धर्मावच्छिन्नप्रतियोगिताकत्वेनाभावबोधकत्वस्यानुपपत्तेः । तेन दर्शितसमास एव प्रथमाधिकरणपदस्याधेयतानिरूपकार्थत्वमुपगम्य । सत्तावान् द्रव्यत्वादित्यादिस्थलीयाव्याप्तिवारकार्थंसम्भवात्प्रथमेत्वसङ्गतमिति न शङ्क्यम् । अथ तर्कालङ्कारमते अनधिकरणमिति प्राथमिकसमास कथञ्चिदनभवनीति चेत् तदा पुरोवादरीत्यैवेदं शास्त्रानुवादकत्वनियमः । तत्र प्रथमे पुरोवादस्य बहुव्रीहिगर्भबहुव्रीहित्वात्तत्पुरुषगर्भबहुव्रीहित्वमनुवादस्य न युज्यते । बहुव्रीहिगर्भबहुव्रीहित्वेतु सत्तावान् जातेरित्यादावव्याप्तिवारकार्थंप्रतिपत्तिः । द्वितीयेच पुरोवादपदस्य तत्पुरुषगर्भबहुव्रीहित्वादनुवादकत्व । तत्र पुरोवादस्य तथाविधनञ्समासगर्भबहुव्रीहित्वेऽप्यनुवादस्य तथाविधनञ्समासबहुव्रीहित्वोपगमेन, सत्तावान् जातेरित्यादावव्याप्तिवारकार्थलाभ इति प्रथमेऽनुपपादाम भवति विशेषक । वस्तुतस्तु अनुवादपुच्छस्य पुरोवादपुच्छतात्पर्ये पुच्छदूषणपक्षम स्यात् । दूषणानौपयिकाभिधानेच विग्रह इति तदविवक्षा तन्मते युक्तैव । प्रथमेऽप्युपलक्षण द्वितीयेऽपि द्रष्टव्यमिति । साध्यमधिकरणानधिकरण यस्येति विग्रहे अधिकरणमाधेयतानिरूपक यस्येति समस्य नञ्समासरूपमुत्तरपद । तत्रोत्तरपदस्य सम्बन्धिकार्थबोधकतया नञो मध्यनिवेशात्साधकत्वमेवेत्यन्यत्र शङ्क्यते—न चेति । साध्याधिकरणाधिकरणत्वसामान्याभाव साध्यानधिकरणानधिकरणत्वमिति नञोऽव्ययी

व्याघरत्न ।

इत्यर्थकेन 'अव्ययं विभक्ति'त्यादिसूत्रेण सिद्धोऽव्ययीभाव । यदि वा 'सुबन्तेन नञ् समस्यत' इत्यर्थकेन 'नञि'ति सूत्रेण सिद्धस्तत्पुरुषो वाश्रीयते उभयथापि नञ एव पूर्वनिपातस्तत्रैवाव्ययमिति नञिति च प्रथमान्तपदप्रतिपाद्यत्वेन समासशास्त्रप्रथमान्तशब्दप्रतिपाद्यमुपसर्जनसंज्ञं स्यादित्यर्थकेन 'प्रथमानिर्दिष्टं समास उपसर्जनमि'ति सूत्रेणोपसर्जनसंज्ञत्वात् 'उपसर्जनं पूर्वमि'ति पाणिनिनाऽभिधानादिति

तदर्थाभावो नञा प्रत्याययितुं शक्यते । तथाच साध्यपदोत्तरं नञो निपातोऽसंभवी। समस्यमानपदपूर्वनिपतितस्यैव नञः साधुत्वादन्यथा अचित्रगुरित्यादौ चित्रादिपदोत्तरमपि नञ्[1]प्रयोगापत्तेरिति वाच्यम् । ससंबन्धिकार्थबोधकोत्तरपदघटितसमुदायेन सह नञ्समासस्थले नञो मध्यनिवेशस्यापि साधुत्वसंपादकत्वात् । अन्यथा घटानधिकरणत्वं साध्याभाववदवृत्तित्वमित्यादौ घटाधिकरणत्वाभावसाध्याभाववदवृत्तित्वाभावप्रत्ययानुपपत्तेः। नहि तत्रानधिकरणत्वपदानां घटादिपदैः समासे तादृशार्थप्रतीतिरुपपद्यते। अनधिकरणत्वपदादिजन्यप्रतीतिविशेष्यीभूताभावेन सममेव घटादिसंसर्गभानात्समस्यमानपदप्रतिपाद्यतावच्छेदककोटिनिविष्टेनापरपदार्थान्वये राजपुरुषादन्य इत्यर्थे राजाऽपुरुष इत्यादिसमासापत्तेः । एवं नञान्वयितावच्छेदकावच्छि-

कृष्णंभट्टीयं ।

भावसमासः । ससंबन्धिकत्वं नित्यसाकाङ्क्षत्वं । विद्यमाने नियतः संबन्धी यस्येत्यर्थात् । संबन्धित्वं विशेषत्वं । संबन्धोपस्थिति नियतोपस्थितिकत्वं वा । चैत्रस्य भार्येत्यादौ भार्येत्यादौ घटानधिकरणमित्यादौ अधिकरणपदार्थैकदेशात्मनः भावप्रत्ययार्थादेः चैत्रपदार्थान्वयात् साध्यनिवेशः । संबन्धिकार्थबोधकपदात्पूर्वस्थानं । जगदीशमतं निराकरोति— नहीति । घटानधीति । घटस्य न अधिकरणमिति त्रिपदसमासस्तु न । अनुशासनाभावात् । तादृशार्थः घटाधिकरणत्वाभावः । घटादिसंसर्गभानादिति । नत्यधिकरणादिनेति । नाभिमतलाभः । समस्येति । अनधिकरणत्वादिपदप्रतिपाद्यतावच्छेदकम् । प्रकृते अधिकरणत्वाभाववत्वादिति । राजाऽपुरुष इति । राज्ञः अपुरुष इति विग्रहः । एतेन न अधिकरण-

न्यायरत्नं ।

भावः । प्रत्ययानुपपत्तेरिति । तथा चागत्या पृषोदरादिगणपाठकल्पनया पृषोदरादीनि यथोपदिष्टमित्यनेनैव निरुक्तप्रयोगाणां साधुत्वमुपपादनीयमिति भावः । केचित्तु घटानधिकरणत्वमित्यादावनधिकरणपदमेव घटाधिकरणत्वाभावार्थकं घटपदं तु तात्पर्यग्राहकमाकाङ्क्षानिर्वाहकम् । आगमविकरणशब्दादिवत् । एवं सति न प्रायिकसमासासंभवः । असमानाधिकरणपदस्य यदधिकरणानधिकरणत्वरूपार्थस्य दीधित्युक्तस्य न समानमसमानमित्याद्यधिकरणविशेषार्थकसमानपदस्य नञा प्रायिकसमासमभ्युपेत्यैव वक्तव्यत्वाच्च । न च घटपदमेव घटाधिकरणलाक्षणिकमधिकरणपदं तात्पर्यग्राहकमिति कुतो न स्यादिति वाच्यम् । नञः

१ निपात मै. पु. पा.

ज्ञाभावस्यैव बोधनादधिकरणसामान्यभेदवानेवानधिकरणपदार्थः स्यात्, तस्य चाप्रसिद्ध्या नञ्पदाधिकरणपदयोः प्राथमिकसमासासंभवाच्चेति । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूपः प्रथमलक्षणस्य निष्कृष्टयथाश्रुतार्थोऽपि साध्यानधिकरणानधिकरणत्वमिति शब्देन प्रतिपाद्यते । तथाहि । आधेयत्वानिरूपकार्थकचरमाधिकरणपदघटितेन अधिकरणानधिकरणपदेन अधिकरणमनधिकरणं आधेयत्वानिरूपकं यस्येति व्युत्पत्त्या अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकनिरूपकताकाधेयतात्वेनान्यपदार्थो बोध्यते । बहुव्रीहौ विग्रहवाक्यादशविशेषणविशेष्यभावापन्नस्य बोधस्तद्विपरीतविशेषणविशेष्यभावापन्नस्य प्रत्ययात् । चित्रा गावो यस्येति विग्रहवाक्यात् यत्पदार्थसंबन्धित्वेन चित्रगोभिन्नगुरित्यतः चित्रगोनिष्ठसंबन्धप्रतियोगित्वेन यत्पदार्थबोधात् । प्रकृतस्थले च विग्रहवाक्यात् यत्पदार्थनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवत्त्वेनाधिकरणप्रतीतेः । एवञ्च साध्यं यस्याधिकरणानधिकरणक यदधिकरणनिष्ठभेदप्रतियोगितावच्छेदकीभूत-

कृष्णभट्टीय ।

समधिकरण घटस्यानधिकरण घटानधिकरण तत्राधिकरणपदस्य घटाधिकरणे लक्षणा । घटपद तात्पर्यग्राहकमित्यपास्तम् । तथासति पुरुषपदस्य राजपुरुषे लक्षणा । राजपद तात्पर्यग्राहकमित्यस्यापि सुवचत्वात् । अप्रसिद्ध्येति । एतेन शाब्दबोधप्रणेनापि पदाक्षितः । न च शशशृङ्गादिशब्दपदद्वयमपि समास । "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति ही"ति न्यायादिति वाच्यम् । तत्र ज्ञानशब्देनाप्यधारयातिरेकत्वात् । इह प्रमाणसमासस्यासंभवोक्ते । अप्रमाणसमासगर्भसमासप्रामाण्यस्यादृष्टचरत्वात् । अथापि दोषापगमानुरोधेन वा तेषां सूत्रप्रणयन । नैतावता तदनुपपत्त्यनुरोधेन नञो मध्यनिवेशो न

व्यापरम् ।

इत्तरपदार्थभेदबोधकतत्पुरुषविग्रहप्राप्तेरिति । न अधिकरणमनधिकरणमिति दर्शितव्युत्पत्त्यैव विवक्षितार्थलाभसंभवे नञो मध्यनिवेशोऽप्यप्रामाणिक एवेति च इति । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूप इति । इदमुपलक्षणं साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वरूपस्याप्यर्थस्य लाभ इति भवति । तथाहि साध्येऽधिकरणानधिकरणत्वं यदधिकरणवृत्तित्वाभावो यस्य तद्गाध्याधिकरणानधिकरणत्व भावप्रधानतया तच्चालाभस्तदभावश्च साध्यपदोत्तरतया बोध्यत इति साध्यनिष्ठासामानाधिकरण्यसम्बन्धितामात्रलाभः सम्बन्धप्रतियोगित्वमेवेति । परेतु साध्यनिष्ठाधेयतानिरूपकत्वस्य साध्यवद्भिन्नस्य

१ अन्य घ च

**नधिकरणं तत्त्वाभावः । साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावयार्थः । तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपका-**

---

निरूपताकाधेयतावदिति व्युत्पत्त्या साध्यनिष्ठाधेयत्वानिरूपकत्वावच्छिन्नभेदवदधिकरणवृत्तित्वं साध्याधिकरणानधिकरणशब्देन प्रत्याय्यते । तदभावः साध्यपदोत्तरनञ्पदघटिततद्वाक्येनेति ।

द्वितीयलक्षणार्थमाह—**साध्यस्येति** । यथाच साध्यानधिकरणमधिकरणं आधेयतानिरूपकं यस्येति व्युत्पत्त्या साध्यानधिकरणाधिकरणत्वशब्देन साध्यानधिकरणवृत्तित्वं प्रत्याय्यते । तदभावो द्वितीयनञेति उक्तशब्दस्य एतदर्थानुवादकतेति भावः । पूरणसंवलितं तत्रेति ग्रन्थं व्याचष्टे—**तत्रेत्यादिना** । मूले केवलान्वयिनि वह्निमान्धूमादित्यादौ चाव्याप्तौ हेत्वकथनात् । प्रथमलक्षणे केवलान्वयिन्यव्याप्तिहेतुं पूरयति—**साध्येत्यादिना, अप्रसिद्धेरित्यन्तेन** । साध्यनिष्ठाधेयतानिरूपकसामान्यभेदनि-

कृष्णंभट्टीयं ।

प्रसक्तः । न्यूनतापत्तेः । तेनोपद एव स्यात्तस्मात् । अतएवोक्तं साध्वित्यादि । ननु साध्यानधिकरणेत्याद्यनुवादस्य यदधिकरणानधिकरणं साध्यमित्याद्यर्थप्रतिपादकत्वमुत्तमसंगतं । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्याऽप्रसिद्धेरव्याप्त्यापत्तेः । तस्य साध्यनिष्ठाधेयत्वानिरूपकेत्याद्यर्थप्रतिपादकतया प्रसिद्धिकथनस्याकिंचित्करत्वात् । अतस्तादृशानुवादस्य तत्प्रतिपादकत्वं अधिकरणानधिकरणेति व्याससमासभेदेन पदद्वयावबोधं दर्शयित्वा साध्याधिकरणानधिकरणेति तद्भेदेन पदद्वयावबोधं क्रमेण दर्शयन्नेव दर्शयति—**साध्यनिष्ठेति** । **व्युत्पत्त्येति** । अधिकरणे न अधिकरणं यस्येति त्रिपदबहुव्रीहिः । अन्यथा अनधिकरणपदे प्रसिद्ध्या प्रामाणिक समासो न स्यादिति न शङ्क्यं । साध्यपदाधिकरणाधिकरणपदयोर्बहुव्रीह्युत्तरं नञ्समासे नञो मध्यनिवेशेन साध्याधिकरणानधिकरणशब्दे तात्पर्यात् । अस्य पदार्थः प्रकृते साध्यरूपः । **हेत्वकथनादिति** । साध्याधिकरणानधिकरण इति शब्दाभा-

व्याप्तत्वं ।

वा व्यापकीभूतोऽभावस्तत्प्रतियोग्यधिकरणतासामान्यकत्वरूपोऽप्यर्थः साध्यानधिकरणानधिकरणत्वशब्दात्प्रतिपादयितुं शक्यते । तथाहि साध्यान-

---

१ वृत्तित्वेन रूपेण नौकादिरूपान्यपदार्थः । साध्याधिकरणानधिकरणपदेन तद्वृत्तिधर्मश्च ना. पु. अ.

ष्ठाधेयत्वानिरूपकत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः । कचिद्व्यभिचारिण्यतिव्याप्तिश्चाधे । द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको बोधो विवक्षितः तदा

---

पदस्यति । यद्वा नानाधिकरणकसाध्यकस्थले मिथो व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदककइत्यर्थः । अत्राव्याप्तेर्हेतुं पूरयति—एकेत्यादिना इतीत्यन्तेन । अनया रीत्याऽव्याप्तिश्च । यत्किंचित्साध्यनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदनिवेशाभिप्रायेण साध्यनिष्ठाधेयतानिरूपकसामान्यभेदनिवेशे च केवलान्वयिन्यव्याप्तिरेव दोष इति ध्येयम् । कचिदिति । पृथिव्यन्यत्वविशिष्टद्रव्यत्ववान्द्रव्यत्वादित्यादौ । अतिव्याप्तिरिति । विशिष्टद्रव्यत्वस्य द्रव्यत्वानतिरेकितया पृथिव्यादेः साध्यनिष्ठाधेयत्वानिरूपकत्वासम्भवादितिभावः । आधेयतायां साध्यतावच्छेदकाव-

कृष्णंभट्टीयं ।

च्छेदेदिति भावः । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्यौत्सर्गिकत्व लक्षणायेत्याह—यद्वेति । मिथ इति । यत्किंचित्साध्यप्रतियोगिकाभावाधिकरणं यत्किंचित्साध्यवद्यत्किंचित्साध्यप्रतियोगिकाभावसमानाधिकरण यत्किंचित्साध्य तदुभयवृत्तित्वं वृत्तित्वान्तार्थः । तत्र च सत्ता द्रव्यत्वपृथिवीत्वान्यतमवान् जात्यादित्यादौ अव्याप्त्यसम्भवापत्तिरिति चेत् । यत्किंचित्साध्यप्रतियोगिताकाभावाधिकरणीभूतहेत्वधिकरणवृत्तिसाध्यतावच्छेदकत्वस्य समुदायार्थत्वात् । यत्किंचिदिति निरूपकत्वेऽन्वेति । अत्र विशिष्टधर्मावच्छिन्नाधेयताया अनतिरिक्तत्वात्साध्यतावच्छेदकावच्छिन्नत्वनिवेशवैयर्थ्यमिति मतनिराकरणायाह—आधेयतायामिति । यत्किंचिदिदं व्यक्तावन्वेति ।

न्यायरत्नं ।

प्राग्वयधर्म स्यादित्यत्र्य इति केचित् । वस्तुतः सर्वेनेति वक्ष्यतीत्यर्थस्तथा च व्याप्त इवेहाप्यवच्छेदकावच्छेदेनान्वयस्य विवक्षितत्वेऽत्रापि सर्वेनेति पठेदित्यपरे । मिथो व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदक इति । यद्यपि मिथो व्यधिकरणत्वं न परस्परानधिकरणवृत्तित्वं भूतलाभावभूतलाभावान्यतरवान् गुणत्वादेरप्युद्देश्यतावच्छेदकाक्रान्ततया तत्राव्याप्तिरूपविधेयाभावेन बाधापत्तेः । नापि परस्पराधिकरणावृत्तित्वं । तादृशान्यतरसाध्यकमनस्त्वहेतोरसंग्रहापत्तेः । एतेन परस्परानधिकरणहेत्वधिकरणवृत्तित्वमपि निरस्तम् । तथापि

---

१ अधिकरणत्व का. पा. । २ प्रसंग. का. पा. ।

केवलान्वयिनि यदि च यत्किंचित्साध्यवद्व्यक्तिभेदः तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः ॥ इति दीधितौ सिंहव्याघ्रलक्षणे ॥

---

च्छिन्नत्वनिवेशेच नैव दोषः । अधिकरणतानिरूपकतावच्छेदकस्यैव आधेयतावच्छेदकतया पृथिवीनिष्ठाधिकरणतानिरूपकतानवच्छेदक-पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत्त्वादेः पृथिवीनिरूपिताधेयतानवच्छेदकत्वादिति ध्येयम् । द्वितीयलक्षणे साध्यवत्त्वावच्छिन्नप्रतियोगिताक-भेदनिवेशो धूमादौ नाव्याप्तिरेव । यत्किंचित्साध्यवद्व्यक्तिभेदनिवेशे च उभयस्थल एवाव्याप्तिरिति । मूलाभिप्रायं स्फुटयन्ति—द्वितीयेचे-त्यादिना । साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदः साध्यवैयधिक-रण्ये विवक्षितः । साध्यवैयधिकरण्यघटकतया विवक्षित इत्यर्थः । केवलान्वयीति । केवलान्वयिन्येव । नानाधिकरणकेति । एक-व्यक्तिसाध्यके सत्तावान्द्रव्यत्वादित्यादौ एकस्य साध्यवतो भेदस्यान्यस्मिन्साध्यवति सत्त्वादव्याप्तेः नानाव्यक्तिसाध्यकेऽपि एतद्वृत्तिद्रव्यभेदवान्[illegible]त्वादित्यादौ अव्याप्त्यसम्भवान्नानाव्यक्तिसाध्यकेनेति

कृष्णभट्टीय ।

तथा च साध्यवत्त्वावच्छिन्नावच्छिन्नभेद इत्यर्थः । तेन नासंभव । मूलेति । यद्यपि तत्रेति [illegible] केवलान्वयिन्यव्याप्तिः साध्यवत्त्वावच्छिन्नभेदनि-वेशमते एव । तथापि धूमेषेति चकारेण [illegible]किंचित्वनिवेश-

न्यायरत्न ।

यत्किंचित्साध्यानधिकरणहेत्वधिकरणवृत्तित्वे तात्पर्यात्र दोष । अधिकरण निरूपकतावच्छेदकसंबधेनेति । अत्र जगदीशमथुरानाथौ विशिष्टसत्ता गुणवृत्तिरिति धी प्रमैव विशिष्टसत्तात्वान्गुण इति धीरप्रमेति स्वानुभवानुसारेण कल्पयन्तौ विशिष्टसत्ता गुणवृत्त्यधिकरणतानिरूपकतानवच्छेदकमपि गुणनि-रूपिताधेयतावच्छेदकं भवत्येवेति मन्येते । गदाधरास्तु विशेषेण दर्शितधीद्व-यस्याप्रमात्व मन्यमाना विशिष्टसत्तात्वस्य गुणनिरूपिताधेयतावच्छेदकत्व न क्ष-मन्त इति ध्येयम् । नानाव्यक्तिकेति मोकमिति । यधेन[illegible] गगनेति पदं निमर्थ पूर्ववत् यथासम्भवमव्याप्त्यापि निर्वाहात् । अथ सर्वत्राव्याप्ति । द्वितीयस्य

१ नानाव्यक्तिसाध्यके केवलान्वयिसाध्यकाव्याप्तिरेव क० पा० ।

नोक्तम् । तथाच द्वितीयलक्षणाभिप्रायेण धूम इति मूलं नानाधिकरणसाध्यकसामान्योपलक्षणमिति भावः । इति सिंहव्याघ्रलक्षणदूषणम् ।

कृष्णंभट्टीयं ।

फलवत्त्वे यत्किंचित्साध्यानधिकरणानधिकरण इत्युभयथैव हेतुरिति भावः । अव्याप्तेरिति । संभवेन न्यूनतापत्तेरिति शेषः ।

इति कृष्णंभट्टीये सिंहव्याघ्रलक्षणविवरणम् ॥

न्यायरत्नं ।

वैकल्पिकस्यार्थस्य केवलान्वयिभिन्न एव नानाधिकरणसाध्यकेऽव्याप्तिरिति भ्रमः स्यादतः सर्वत्रेति वक्तव्यं । एतत्सूचनायैव सर्वत्रेत्यस्य केवलान्वयिनि व्यतिरेकिणि चेति भवानन्दादीनां व्याख्यानमिति चेन्न । एवं सति नानाव्यक्तिक इति पूर्वग्रन्थेपि सर्वत्रेति वक्तव्यं स्यात् । अन्यथा प्रथमलक्षणीयद्वितीयवैकल्पिकार्थस्याव्याप्तेस्तेन सर्वेन तदवचनेन न्यूनतासाम्यात् । मैवं नानाव्यक्तिसाध्यके चेति चकारेण केवलान्वयिनोऽपि समुच्चयात्सर्वत्रेति तत्रानुक्तावपि न्यूनताविरहात् । नन्वत्रापि सर्वत्रेति स्थाने चकारं पठित्वा केवलान्वयिसाध्यकसमुच्चय कुतो न कृतः वैरूप्यस्यान्याय्यत्वादिति शङ्क्यम् । उपायस्योपायान्तरादूषकत्वात् । अथ नानाव्यक्तिकेत्यस्य स्थाने नानाधिकरणकेति कुतो नोक्त द्रव्य पृथिवीत्वादित्यादौ पूर्वलक्षणस्याव्याप्तिविरहेऽपि यथासंभवमव्याप्तौ तात्पर्यस्य वक्तु शक्यत्वादिति चेत् । पूर्वलक्षणे साध्याधिकरणनानात्वं नाव्याप्तिप्रयोजकं । किंतु साध्यनानात्वमित्याशयेन पूर्वं नानाव्यक्तिसाध्यकेत्युक्तं । तदपि एतद्वृत्तियावद्धर्मसाध्यके व्यभिचारेण यथाश्रुतं न प्रयोजकमिति मिथ इत्यादिरीत्या पारिभाषिकं तदनुमतमिति ध्येयम् ॥ इति सिंहव्याघ्रलक्षणदूषणं समाप्तम् ॥

# अथ सार्वभौमपरिष्कारः ।

केचित्तु । साध्येति । साध्यासामानाधिकरण्यं हेतुताव-च्छेदकसंबन्धेन हेत्वधिकरणे, तेनैव संबन्धेन साध्यवद्वृत्तित्वा-

---

साध्यासामानाधिकरण्यानधिकरणत्वमित्यत्र साध्यासामानाधि-करण्यपदेन साध्याधिकरणवृत्तित्वाभावविवक्षणेपि द्रव्यं सत्त्वादित्या-द्यावसिद्ध्याप्तिर्न समयति । सामानाधिकरण्यस्याव्याप्यवृत्तितया सत्ता-दावपि गुणाद्यवच्छेदेन द्रव्यत्वादिसामानाधिकरण्याभावसत्त्वात् । किंतु वह्निमान्धूमादित्यादावव्याप्तिः । स्वावयवावच्छेदेन धूमादावपि वह्न्यादिसामानाधिकरण्याभावासत्त्वात्। सापि हेतुतावच्छेदकसम्बन्धे-न यद्धेतुमत्तद्वच्छिन्नत्वेनाभावं विशेष्य वारयितुं शक्यत इत्यभिप्रा-येण तत्पदं तादृशाभावपरं वर्णयतः सार्वभौमस्य मतमुपन्यस्यति ।

केचित्त्विति । हेत्वधिकरण इति । सप्तम्यर्थो भावान्वेय्यव-च्छिन्नत्वम् । तेनैव संबन्धेनेति । तृतीयार्थोऽपि वृत्त्यन्वितमव-च्छिन्नत्वम् । वृत्तिपदस्य संबन्धार्थकत्वे तु अभेद एव तदर्थः । अ-नधिकरणत्वपदस्याधिकरणत्वाभावः अभावमात्रं वा यदर्थः स्यात्तदा

कृष्णमहीयं ।

## अथ सार्वभौमपरिष्कारप्रारम्भः ।

हेतुमदिति । यत्किंचित्पदार्थवद्वियुक्तौ संयोगेन शैवालादिमज्जलाव-च्छेदेन तृणादिमत्त्वावयवावच्छेदेन च धूमे वह्निसामानाधिकरण्याभावस-त्त्वादव्याप्तिरतो हेतुपद । अभावमात्रमिति । यत्साधिकरणतोत्ता-

व्यायात ।

## अथ सार्वभौमपरिष्कारविवरणम् ।

यद्धेतुमदिति । यत्किंचित्पदार्थवद्वियुक्तौ तृणादिमत्त्वावयवावच्छेदेन वह्निसामानाधिकरण्याभावस्य धूमादावसत्त्वात्तद्वेयमादवस्थ्यमतो हेतुनिवेश । धूमे पर्वते न वह्निमत्वंयुक्तमिति प्रतीतेरधिकरणभेदेन तत्तद्धूमनिष्ठातिरि-क्ताधिकरणतायामेव पर्वतावच्छिन्नत्वमानमुपगम्य कारणाभावपर्वतावच्छि-न्नत्वनिरूपितत्वाभावनिरूपितवह्निनिष्ठाधिकरणतास्वीकारो व्यर्थ इत्यभिप्राये-

---

१ क्वचित्र का पा.

(स्वा)भाववत्तदधिकरणभिन्नत्वमर्थः । तेन धूमस्य स्वावयवे सं-

---

अव्याप्यवृत्त्यधिकरणताया अप्यव्याप्यवृत्तितायाः सत्तादौ द्रव्यत्वाद्यवच्छेदेन साध्यासामानाधिकरण्याभावाधिकरणत्वाभावस्य सामानाधिकरण्यरूपतदभावाभावस्य चाक्षतत्वादतिव्याप्तिस्तदवस्थैवेत्यनधिकरणपदं अधिकरणभेदवदर्थकतया व्याकरोति—तदधीति । यद्यपि अधिकरणभेदेनाभावभेदाभावात्संयोगाद्विना धूमाद्यधिकरणपर्वताद्यवच्छिन्नो यः संबन्धान्तरेण वह्नित्वरूपादिनिष्ठवह्न्यादिमत्संयुक्तत्वाभावः तस्यैव स्वावयवावच्छेदेन धूमादौ वर्तमानतया धूमादेस्तादृशाभावानधिकरणत्वं दुर्भेदम् । तथापि तादृशहेत्वधिकरणावच्छिन्नत्वविशिष्टाभावानधिकरणत्वस्यैव विवक्षणीयतया न दोषः । रूपे पर्वते न वह्निमत्संयुक्तत्वमितिवत्, धूमे पर्वते न वह्निमत्संयुक्तत्वमिति प्रतीत्यनुदयात्पर्वतत्वावच्छिन्नत्वविशिष्टनिरूपितायाः वह्निमत्संयुक्तत्वा(व)भावीयविलक्षणाधिकरणताया रूपादावेवोपगमात् । अभावाधिकरणतायामेव वाधिकरणविशेषावच्छिन्नत्वं निवेशनीयम् । तावतापि धूमरूपयोरभिन्नव्याप्यभावस्य परस्परानवच्छेदकावच्छिन्नाधिकरणताभेदेन कथितदोषनिराकरणसंभवात् । उभयत्र हेतुतावच्छेदकसंबन्धनिवेशप्रयोजनं क्रमेण दर्शयति—तेनेति । स्वावयवे

कृष्णंभट्टीयं ।

स्वागमभिप्रेत्य । अधिकरणभेदवदिति । भेदस्तु व्याप्यवृत्तिरिति भावः । नन्विदमयुक्तं । विशिष्टातिरिक्तत्वापक्षे साध्याघटितमूर्त्तविशिष्टद्वयोरप्यवस्तुनोऽनधिकरणत्वस्य साध्यनिरूपितव्याप्तित्वासंभवात् । वच्छेदघोऽप्यस्य साध्यसामानाधिकरण्याभावात्मकत्वात् हेत्वधिकरणावच्छिन्नत्वस्याधिकरणतानिरूपकतावच्छेदकत्वे मानाभावाद्धीनत्वाच्चेत्यत आह—

न्यायरत्नं ।

णाह—अभावाधिकरणतायामेव वेति । यद्यपि पूर्वकल्पे विशिष्टाधिकरणतानिवेशो व्यर्थः । सार्वभौममते विशिष्टातिरिक्तत्वादेस्त्वधिकरणावच्छिन्नत्वविशिष्टानधिकरणत्वनिवेशादेवाव्याप्तिवारणसंभवात् । तथापि मतद्वयसाधारण्येन तन्निवेशो बोध्यः । परस्परेति । यथा रूपनिष्ठायां तदधिकरणतायां स्वावयवो नावच्छेदकस्तथा धूमनिष्ठतदधिकरणतायां पर्वतो नावच्छे-

सयोगेनावृत्त्यापीत्यन्वयः । तथाच स्वावयवावच्छेदेन साध्यवत्सयुक्तत्वासत्त्वेन तदभावस्याक्षवत्तया प्रथमतो हेतुतावच्छेदकसम्बन्धानिवेशे स्वावयवरूपस्वाधिकरणावच्छिन्नसाध्यवत्सयुक्तत्वाभावानधिकरणत्वविरहेण सयोगेन धूमहेतौ कस्यापि साध्यस्य व्याप्तिर्न स्यादिति भावः। यद्यपि तादृशसबन्धनिवेशेऽपि वह्निमत्सयुक्तत्वादेः कालिकाव्याप्यवृत्तितया धूमादावुत्पत्तिकालावच्छेदेन वह्निमत्सयुक्तत्वाभाववृत्तेः पर्वतादेरपि कालोपाधितया तादृशाभावावच्छेदकत्वाद्व्याप्तितादवस्थ्यम्, तथापि इदानीमिति प्रतीतिनियामककालस्यावच्छेदकत्वादिहेति प्रतीतिनियामकदेशनिष्ठावच्छेदकताया वैलक्षण्य दुरपह्नवम्। यदभावात्पर्वते धूमे न वह्निमत्सयुक्तत्वमिति

कृष्णभट्टीय ।

असाध्यापीति । पर्यन्तेति । यथा रूपनिष्ठायां तदधिकरणतायां स्वावयवो नावच्छेदक तथा धूमनिष्ठायां तदधिकरणतायां पर्वतो नावच्छेदक इत्यर्थ । कस्यापीति । वह्निमत्त्वेऽस्यावाच्यत्वसूचनाय । इदानीं धूमे न वह्निमत्सयुक्तत्वमिति प्रतीतिरत्र प्रमाण। ननु तत्र पर्वत इति देशत्वेन पर्वतान्तर्भाव इत्याशयेन कालोपाधिविधयेति वैलक्षण्यानुपगमे बाधकमाह— यदिति । यत्पद विलक्षणावच्छेदकतापर । कालविधयाऽवच्छेदकताया देशविधयाऽवच्छेदकतावैलक्षण्यानुपगमे पर्वतरूपकालस्य धूमनिष्ठसाध्यसामानाधिकरण्याभावावच्छेदकतया पर्वते धूमे न वह्निमत्सयुक्तमिति प्रतीत्यापत्ति । तथा विलक्षणावच्छेदकताविरहस्येत्यर्थ । तादृशावच्छेदकतयोर्भेदे किं प्रमाणमित्याशङ्कानिराकरणाय इदानीमिति । प्रतीतिनियामकेति । इहेति प्रतीतिनियामकेति योज्य । तेन कालविधयावच्छेदकत्वादिक अखण्डोपाधि । तदवच्छिन्न कालत्वादिभाननियतभानकमिति लभ्यते । यत्तु इदानीमिति प्रत्ययनिरूपितकालनिष्ठविषयतानिरूपितविषयत्वाभाव एव वैलक्षण्यमिति । तन्तुच्छ । इहेदानीमिति विभिन्नप्रतीत्योर्विषयभेदासिद्धौ प्रतिनियतविषयता तदभावरूपवैलक्षण्यासिद्धे । विभिन्नप्रत्ययरूपप्रमाणस्य तद्विषयत्वतदभावरूपवैलक्षण्यासाधकत्वाच्च । नहि घट घट इत्यादिप्रत्ययानां स्वविषयत्वतदभावादिविषयत्वम् । अनुव्यवसायस्यैव तथात्वादिति। अत्र धूमनिष्ठसाध्यसामानाधिकरण्याभावीया देशविधया अव-

व्यापरत्न ।

दक इत्यर्थ । कालोपाधितयेति । कालत्वेनेत्यर्थ । एतेन पर्वतस्य तादृशाभावावच्छेदकत्वे इदानीमित्यादिप्रतीतिरेव नियामिका । न त्विह पर्वते इत्यादिप्रतीतिरिति सूचितम् । वैलक्षण्यमिति । अखण्डोपाधिरूपमिति

प्रत्ययाभावः । हेतुमन्निष्ठत्वादृशावच्छेदकतानिरूपकत्वमेव निवेश्य- मतो न दोषः । नच कालोपाधेरवच्छेदकत्वायां अवच्छेद्याधिकरणे- नावच्छेद्यस्य कालिकसंबन्धो अवच्छेदकत्वानियामकः । इत्थंच तादृशसंबन्धानवच्छिन्नत्वमेव देशस्यावच्छेदकतायां वैलक्षण्यं, अ- न्यस्य दुर्वचत्वात् । तथाच व्यभिचारिणि कालिकसबन्धेन हेतौ

कृष्णभट्टीय ।

च्छेदकता तद्विषयकाख्यविषया अवच्छेदकतातो विलक्षणा कालत्वादिविषयकप्र- मात्विषयधूमनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकतात्वादिति प्रयोग । तेन पर्वते धूमे न वह्निमत्संयुक्तमिति प्रत्ययासिद्धावपि न क्षते । अथवा पर्वतादौ दे- शविषयावच्छेदकत्वस्याभावात्तत्र तादृशावच्छेदकताविषयकप्रत्ययाभाव ता- दृशावच्छेदकताविषयतानिरूपितविषयतासम्बन्धावच्छिन्नधूमनिष्ठवह्निमद्वृत्ति- त्वप्रत्ययाभावो वा । विशेष्यैतद्वयस्य प्रमात्वविशिष्टतद्बुद्ध्याज्ञाननियामकत्वा- दिति बहुः पन्थाः । व्यभिचारिणि कालिकसंबन्धेन हेताविति । सं- योगेन वह्निमत्कालिकेन धूमवदित्यादिव्यभिचारिणीत्यर्थः । व्यभिचारनिरूप- कहेत्वधिकरणीभूतह्रदाद्यवच्छेदेन वह्निमन्निरूपितकालिकसंबन्धावच्छिन्न- वृत्तित्वाभावस्य हेतौ सत्त्वेऽपि तस्य हेत्वधिकरणीभूतह्रदनिष्ठकालिकसंबन्धा- वच्छिन्नावच्छेदकताकत्वनियमेन न लक्षणघटकता । किंतु तदवयवच्छेदेन ह्रद- समवेतरूपत्वादेव तादृशाभावस्य प्रसिद्धिरिति तन्निवेशस्य हेतौ सत्त्वादति- व्याप्तिः । नच धूमावयवावच्छेदेन कालिकसम्बन्धावच्छिन्नतथाविधवृत्तित्वा- भावस्यैव हेत्वधिकरणीभूतो य सावयव. तन्निष्ठसमवायसंबन्धावच्छिन्ना- वच्छेदकताकत्वान्नातिव्याप्त्यवकाश इति वाच्यम् । एवमपि समवायेन पृथिवीत्ववान्कालिकेन घटत्वादित्यादौ निरवयवे व्यभिचारिणि विपक्षीभूतज- लसमवेतरूपस्यैव तादृशसाध्यवद्वृत्तित्वाभावाधिकरणतया हेतोरसत्त्वादति- व्याप्तेः । नच तत्रापि अवयवावच्छेदेन साध्यवद्वृत्तित्वाभावसत्त्वान्नाव्या- प्तिव्याप्तिरिति वाच्यम् । तथाप्येतत्क्रियाभिन्नं कालिकेन घटादित्यादावति- व्याप्तेः । तद्वृत्तिक्रियाया एव व्यभिचारनिरूपकाधिकरणताया तस्याः कालिके- नैव हेतुनिष्ठसाध्यवद्वृत्तित्वाभावस्यावच्छेदकतया हेतुनिष्ठतादृशवृत्तित्वा- भावो न लक्षणघटकः । किंतु क्रियात्व एवेत्यतिव्याप्तिः । एवं महाकालभिन्न कालिकेन कालभेदात्, स्पन्दाभावो घटत्वात्, प्रलयभिन्न कालिकेन गोत्वादि- त्यत्राप्यतिव्याप्तिः । महाकालादौ हेतौ कालिकेतरसंबन्धाप्रसिद्धेरित्याशयात् । कालभेदवान् कालिकेन कालभेदादित्यादौ विरुद्धे साध्यवन्निरूपितका- लिकसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्धेरुक्तं व्यभिचारिण्येति । कालिकादीत्या

न्यायरत्नं ।

दोषः । प्रकारान्तरेण वैलक्षण्यमाशङ्क्य निराकुरुते—नचेति । व्यभिचारि-

वर्तमाने साध्यसामानाधिकरण्याभावे व्यभिचारनिरूपकाधिकरणीयावच्छेदकतायां कालिकसंबन्धानवच्छिन्नत्वविरहादतिव्याप्तिरिति वाच्यम् । कालिकव्याप्यवृत्तावपि कालिकसंबन्धघटितात्मत्वाकाशत्वादिसामानाधिकरण्ये दैशिकसंबन्धेनात्मत्वानधिकरणकालस्य देशविधयैवावच्छेदकत्वात् । कालविधया तस्यावच्छेदकत्वे तादृशसामानाधिकरण्यस्य कालिकाव्याप्यवृत्तित्वापत्तेः कालिकसंबन्धानवच्छिन्नत्वादन्यस्यैव वैलक्षण्यस्य देशविधया अवच्छेदकतायां स्वीकरणीयत्वात् । हेत्वधिकरण इत्यत्र हेतुपदं अधिकरणभिन्नत्वानुयोगित्वहेतुपरम् । अतो धूमाद्यन्तरसंयु-

कृष्णंभट्टीयं ।

दिना संबन्धसामान्यपरिग्रहः । **कालिकव्याप्यवृत्तौ** । कालानवच्छिन्ने । दैशिकसंबन्धेनात्मत्वानधिकरणकालस्येति च कालिकसंबन्धेनैव भवच्छेद्याधिकरणसंबन्धित्वं वक्तुं युक्तं । तथाचात्मत्वसामानाधिकरण्यावच्छेदको यः कालस्तद्विषयावच्छेदकतायाः कालिकसंबन्धावच्छिन्नत्वेऽपि तस्या देशविधयावच्छेदकतारूपत्वमिति साधीयं । इह घटे आकाशत्वे आत्मत्वसामानाधिकरण्यमिति प्रत्ययादिति । **कालिकाव्याप्यवृत्तित्वापत्तेरिति** । तत्काल-

न्यायरत्नं ।

**पीति** । महाकालभिन्नो घटत्वादित्यादावित्यर्थः । न च महाकालावच्छेदेन महाकालान्यवृत्तित्वाभावस्य महाकालवृत्तिवृत्तितया कालिकसंबन्धावच्छिन्नमहाकालाधिकरणताप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम् । महाकालपरिमाणनिष्ठमहाकालाधिकरणताया महाकालस्य कालिकसंबन्धेनेव समवायेनाप्यवच्छेदकत्वसंभवात् समवायावच्छिन्नाधिकरणताया कालिकसंबन्धानवच्छिन्नत्वप्रसिद्धिसौलभ्यात् । **कालिकव्याप्यवृत्तावपीति** । आकाशत्वे इदानीमात्मत्वसामानाधिकरण्यं न तदानीमिति प्रत्ययाभावादिति भाव । यद्यपि व्याप्यवृत्तावित्यस्य सामानाधिकरण्ये इति स्त्रीविशेषणत्वात्स्त्रीत्वमपेक्षितमिति व्याप्यवृत्तिनीत्येव वक्तुमुचितम् । तथापि व्याप्यवृत्तिपदे व्याप्या निरवच्छिन्ना वृत्तिर्यस्येति विग्रहः "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति" सूत्रेण तृतीयादिविभक्तौ परतः पुरुषधारणप्रवृत्तिनिमित्तकशब्दस्य पुंवद्भावविधानात्प्रकृते व्याप्यवृत्तिशब्दप्रवृत्तिनिमित्तस्य निरवच्छिन्नवृत्तित्वस्य पुरुषसाधारण्यात् पुंवद्भावानुपपत्तिरिति ध्येयम् । **दैशिकसंबन्धेनात्मत्वानधिकरणेति** । एतेन कालिकसंबन्धातिरिक्तसंबन्धेन तस्यावच्छेदकत्वाभाव सूचितः । **कालिकाव्याप्यवृत्तित्वापत्ते-**

१ संबन्धान्तरेण वर्तमानप्रमेयत्वादिनिष्ठप्रकृताव्यवच्छेद्यसाध्यसामानाधिकरण्यावच्छेदकताया एव तादृशत्वाभावदशायामपाधिकरणे प्रमेयत्वादिविशिष्टस्य सत्त्वादिति । २ वैयधिकरण्य ।

तत्तदवयवावच्छेदेन धूमादेस्तादृशाभावसत्त्वेऽपि न क्षतिः । एवंच व्याप्तेः प्रतिधूमादिकं भिन्नत्वेऽपि केनापि रूपेणानुगतानां

कृष्णभट्टीयं ।

प्रत्यिन्नत्वस्य तदन्यकालावच्छेदेन तद्वृत्त्यभावप्रतियोगित्वव्याप्यतया तदुपगमे तादृशप्रतियोगित्वापत्तेरित्यर्थः । तद्देशावच्छिन्नत्वं तु न तदन्यदेशावच्छेदेन तद्वृत्त्यभावप्रतियोगित्वव्याप्यं । ज्ञेयत्वादौ घटाद्यवच्छिन्नवाच्यत्वसामानाधिकरण्यं तदन्यदेशावच्छिन्नवद्वृत्त्यभावप्रतियोगित्वस्यासत्त्वादिति न दैशिकाव्याप्यवृत्तित्वापत्तिः । ननु व्याप्तेस्तत्तद्व्यक्तित्वरूपत्वे धूमत्वादेर्व्याप्यतावच्छेदकत्वं न स्यात् । व्याप्यघटकत्वात् । प्रत्येकं तत्तद्व्यक्तिरूपव्याप्यनिरूपकत्वविरहादित्यत आह—एवंचेति । तत्तद्व्यक्तित्वव्याप्यतमत्वं तत्तत्सद्धेतुव्यापकज्ञानव्यक्तिरेव वा विशेष्यतासंबन्धेन अनुगमकं रूपं । नचैवमपि द्रव्यवान् संयोगेन प्रमेयवह्न्यादौ प्रमेयत्वमनियामकमेवेति वाच्यं । स्वविशिष्टव्यापक-

व्यापकत्वं ।

**रिति** । तत्कालावच्छिन्नत्वस्य तदन्यकालावच्छेदेन तद्वृत्त्यभावप्रतियोगित्वव्याप्यत्वात्तदुपगमे तादृशप्रतियोगित्वापत्तेरित्यर्थ इति केचित् । वस्तुतस्तु आकाशसन्निहासमयस्य समानाधिकरणमिति प्रतीतिवदाकाशान्तर्भावेणाभासमानसमयसमानाधिकरणमिह नेति प्रतीतिरप्यनुभवसिद्धा । तत्र प्रथमप्रतीतौ कालिकसम्बन्धावच्छिन्नत्वं कालविधयाऽवच्छेदकत्वं यदि भासते तदा नेदानीमिति प्रतीत्यापत्तेरिति भावः । **धूमाद्यन्तरसंयुक्तेति** । यद्यपि स्वावयवसंयुक्तधूमादौ तादृशाभावानधिकरणत्वसम्भवात् हेतुपदस्य तद्धेतुपरत्वं युक्तं । तथापि धूमप्रागभावादौ पर्वतीयवह्नौ तादृशाभावानधिकरणत्वमादायातिव्याप्तेर्वारणाय हेतुतावच्छेदकावच्छेदेन तदनधिकरणत्वविवक्षणावश्यकत्वादुक्तं तद्धेतुपरत्वं हेतुपदस्य । ननु हेतुपदस्य तद्धेतुपरत्वे व्याप्तेस्तत्तद्व्यक्तिरूपतापत्त्या न क्वापि तद्व्यक्तित्वस्याऽनतिप्रसक्तं धूमत्वमिति धूमत्वस्य व्याप्यतावच्छेदकत्वं न स्यात् चेष्टापत्तिः । धूमत्वावच्छिन्नहेतुकानुमितिव्यवहारापत्तेर्धूमादित्यादिन्यायप्रयोगासङ्गत्यापत्तेश्चेत्यत आह—**एवं चेति** । **केनापि रूपेणेति** । अन्यतमत्वादिनेत्यर्थः । **धूमत्वादिकमवच्छेदकमिति** । तावत्तत्तद्व्यक्तित्वान्यतमत्वावच्छिन्नानतिप्रसक्तस्य धूमत्वादेर्व्याप्यतावच्छेदकत्वं निराबाधं । तावद्व्याप्तीनां स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वरूपानुगतव्यक्तित्वरूपसामान्यप्रत्यासत्त्या ज्ञातुं शक्यत्वान्न दुर्ज्ञेयतापीति भावः । अथैवमपि सत्तावान् समवायेन प्रमेयादिति प्रयोगानुपपत्तिरसमवेतप्रमेयस्य निरुक्तव्याप्यघटकत्वेन प्रमेयत्वस्य समवेतप्रमेयनिष्ठतत्तद्व्यक्तित्वान्यतमत्वावच्छिन्नातिप्रसक्ततया तदवच्छेदकत्वविरहादिति चेन्न । तादृशान्यतमत्वावच्छिन्नानतिप्रसक्तत्वेन तादृशान्यतमत्वं हेतुतावच्छेदकसंबन्धप्रतियोगिनि यद्धर्मविशिष्टे वर्तमानाभावप्रतियोगितायामनवच्छेदकं तत्त्वस्य विवक्षितत्वात् । अनुगतव्याप्तिं वदता

दनवच्छिन्ना या या अधिकरणता तत्तदन्यत्वेन साध्यसामानाधिक-

कृष्णभट्टीय ।

मावच्छेदकं वा द्रव्यं सत्त्वादित्यादावव्याप्तिप्रसक्तिरित्याहुः ॥ वस्तुतस्तु । हेतुताव-
च्छेदकसम्बन्धावच्छिन्नस्वानुयोग्यधिकरणतावदनवच्छेदकत्वं सम्यक् । द्रव्यं स-
त्त्वादित्यादौ स्वानुयोगिसत्ताधिकरणतावदनवच्छेदकत्वं न स्वस्येत्यतिप्रसङ्गात् ।
अत्र स्वानुयोगिनो यद्यदधिकरणमिति निवेशपक्षे कालिकसम्बन्धेन धूमानुयो-
गित्वस्यादेर्यथार्थान्तर्गततया तद्विशिष्टहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदक-
त्वाप्रसिद्धिः । वस्तुतस्तुकल्पे च, सम्बन्धान्तरेण वर्तमाननिष्ठाधिकरणताया
अपि स्वानुयोग्यधिकरणतावच्छिन्नत्वमेव । गगनादेरपि विषयतासम्बन्धेनाधि-
करणसम्भवात् । एवं वह्निमान् संयोगेन रूपादित्यादावतिव्याप्तिः । स्वानु-
योग्यधिकरणनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकान्यत्वस्य हेतुनिष्ठा-
धिकरणताया सत्त्वात् । अतः स्वानुयोग्यधिकरणताया हेतुतावच्छेदकसम्बन्धा-
वच्छिन्नत्वनिवेशः । धूमान्तरसंयुक्तेत्यादिरीत्या व्याप्तिपारम्यं तु न सम्यक् ।
हेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतानिवेशनस्यैवाव्याहतत्वात् । धू-
मान्तरसंयुक्त्वावच्छिन्नधूमनिष्ठतादृशाधिकरणतायां धूमान्तरनिष्ठता-
दृशाधिकरणताभेदस्यानुगमदोषवादरूपमिति चेत् न इति दीपिका । व्यावच्छि-
स्वानुयोग्यधिकरणावच्छेदकतानवच्छेदकाधिकरणत्वावच्छिन्नभेदस्तु नोक्त ।
रूपभूतत्वावच्छिन्नधिकरणतासाधारणसाध्यवद्वृत्तित्वाभावाधिकरणता

न्यायरत्न ।

अर्थमिति चेत । तथा सति हेतुतावच्छेदकसम्बन्धावच्छिन्नाधीतानागतदेशान्तरी-
यकालान्तरीयावच्छेदकतानामपि लक्षणे निवेशापत्त्या गौरवात् । किञ्च सत्ता-
याः द्रव्यत्वादित्यादावव्याप्तिः, तन्नासमवेतवृत्त्यधिकरणताया हेतुतावच्छेदकसम्ब-
न्धावच्छिन्नावच्छेदकतान्यत्वासमवेते च साध्यसामानाधिकरण्याभावाधिकर-
णताया असत्त्वेन हेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकान्याधिकरणतान्य-
तादृशाधिकरणताया अप्रसिद्धेः । यथोत्पत्तिक्षणविशिष्टे द्रव्ये गुणे न सत्तासमवे-
तत्वमिति प्रतीत्योत्पत्तिक्षणविशिष्टद्रव्यावच्छेदेन सत्तासमवेतत्वाभावाधिकरण-
ताया गुणादौ प्रसिद्धा तस्या एव हेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताका-
न्याधिकरणतान्यसाध्यसामानाधिकरण्याभावाधिकरणतात्वात्तद्भिन्नत्वस्य हेतौ
सत्त्वात् लक्षणसमन्वय सम्भवतीति वाच्यम् । स्वानुयोग्यधिकरणतानिवेशेऽप्युत्पत्ति-
क्षणविशिष्टपर्वते धूमे न वह्निमत्संयुक्तत्वमिति प्रतीतिसिद्धसाध्यसामानाधिकर-
ण्याभावाधिकरणाभावाधिकरणतामादायाव्याप्तेर्वारणाय तादृशप्रतीतेरुत्पत्तिक्ष-
णविशिष्टपर्वतावच्छेदेनाभावविषयकत्वानुपगमनात्तस्य प्रतीत्योत्पत्तिक्षणविशि-
ष्टद्रव्ये इत्याकारकदर्शितप्रतीतेरुत्पत्तिक्षणविशिष्टद्रव्यावच्छेदेनाभावविषयक-
तया तादृशाधिकरणतान्यसाध्यसामानाधिकरण्याभावाधिकरणताया सत्ताद-
द्रव्यत्वादित्यादावप्रसिद्धेरिति हेतुतावच्छेदकसम्बन्धेन स्वानुयोग्यधिकरणतानि-

रण्याभावाधिकरणतायाः विशेषणीयत्वान्नोक्तदोषः। नवाऽननुगमः। एवंच कालोपाधिविधया हेत्वधिकरणस्य देशस्यावच्छेदकत्वेन उक्तदोषस्य अनवच्छिन्नप्रतियोगिकोटौ हेतुतावच्छेदकसंबन्धावच्छिन्ना-

कृष्णंभट्टीयं ।

त्वस्य स्वपदेनोपादानेऽपि तस्यातिप्रसक्तत्वेन तादृशावच्छेद्यतानवच्छेदकतया तदवच्छिन्नभिन्नसाध्यवद्वृत्तित्वाभावाधिकरणताया अप्रसिद्धेः । संबन्धान्तरेणावर्तमानवृत्त्यधिकरणताव्यावृत्तस्य स्वावयवनाशविशिष्टरूपावच्छेदकभिन्नाधिकरणताद्वयसाधारणधूमाधिकरणताविशेषणत्वादेः स्वपदार्थत्वे तस्यातिप्रसक्ततया तादृशावच्छेद्यतानवच्छेदकतया तदवच्छिन्नभिन्नाया संबन्धान्तरेण वर्तमानवृत्त्यधिकरणताया एव प्रसिद्धेरतिव्याप्तेः । तादृगधिकरणतानुयोग्यधिकरणानवच्छेद्यत्वकूटवित्तिरिताधिकरणतात्वानवच्छिन्नभेदस्तु नोक्तः। पर्यवसन्नस्य परिचायकतया तत्तोऽपि यथोक्तकल्पे लाघवात्। स्वाधिकरणावच्छेद्यसाध्यसामानाधिकरण्याभावाधिकरणतावद्भिन्नत्वनिवेशेऽनुगमात् स्वानुयोगीत्यादिरीत्या निवेश इत्याह—नचेति। इदानीं धूमे न वह्निमत्संयुक्तत्वमिति प्रतीतिसिद्धतदधिकरणताभावाय प्रसंजितदोषं देशविधया विलक्षणावच्छेदकत्वानिवेशेऽप्युद्धरति। एवंचेति। तथाप्येवं सति स्वानुयोगित्वं व्यर्थम्। धूमान्तरसंयुक्तस्वावयववह्निविशिष्टसाध्यसामानाधिकरण्याभावावच्छेदकताया हेतुतावच्छेदकसंबन्धावच्छिन्नत्वात्तदव्याप्त्यभावात्। तथापि प्रसिद्धानुमाने हेतुनिष्ठाना संबन्धान्तरेण वर्तमानानिष्ठानां अनुमितिनिष्ठाना च साध्यवद्वृत्तित्वाभावाधिकरणतानां हेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वानिरूपकतया सन्निकृततादृशाधिकरणतानामप्रसिद्धिरतस्तन्निवेशः । ननु लाघवात् स्वानुयोगिनो हेतोर्वा यदधिकरणं तन्निष्ठहेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकत्वमेव निवेश्यम्। एवंच हेतुतावच्छेदकसंबन्धेनाधिकरणं नभूद्वयं च

श्यामरत्नं ।

वेशः। तन्नेद स्वानुयोगित्वविशेषणतया हेतुतावच्छेदकावच्छिन्नस्य निवेशाय हेतुपदं हेतुतावच्छेदकावच्छिन्नपरमित्युक्तम्। अन्यथा द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्त्यापत्तेः सत्तानिष्ठद्रव्यत्वसामानाधिकरण्याभावाधिकरणताया स्वानुयोग्यधिकरणवृत्त्यनवच्छेद्यत्वविरहेण स्वपदेनोपादानासम्भवात्। उक्तदोषस्येति। उत्पत्तिकाले धूमे वह्निमत्संयुक्तत्वमिति प्रतीतिसिद्धधूमनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतामादायाव्याप्तेरित्यर्थः। हेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वनिवेशेनापीति। अपिना विलक्षणदेशविधयाऽवच्छेदकत्वनिवेशेनाप्युक्तदोषवारणं कर्तव्यमिति सूचितम्। अत्रेदं बोध्यम्। स्वानुयोग्यधिकरणनिष्ठावच्छेदकताया हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे हेतुतावच्छेदकसंबन्धेन स्वानुयोग्यधिकरणत्वनिवेशो व्यर्थः। स्वावयवावच्छिन्नाया साध्यसामा-

मतोऽनवच्छेदकत्वात्। न क्षतिरिति। नाव्याप्तिः। नासम्भवश्चेत्यर्थः। साध्यवत्ता च साध्यतावच्छेदकसम्बन्धेन बोध्या। तेन समवायेन वह्नौ साध्ये संयोगेन हेतौ धूमे पर्वताद्यवच्छिन्नवह्निमद्वृत्तित्वसामान्याभावासत्त्वेऽपि नातिव्याप्तिः। तथा सद्धेतावपि यत्किंचित्सम्बन्धेन यः साध्यवान् तद्वृत्तित्वाभावस्य स्वाधिकरणावच्छेदेन सत्त्वेऽपि न दोषः। साध्यवत्त्वं चोपलक्षणविधया अभावप्रतियोगितावच्छेदककोटौ निवेशनीयम्। ननु विशेषणविधया तेनोत्पत्तिक्षणावच्छिन्नघटादौ गन्धाद्यसत्त्वात्तद्वृत्तिघटाद्यवच्छेदेन पृथिवीत्वादौ गन्धादिविशिष्टवृत्तित्वाभावसत्त्वेऽपि गन्धवान् पृथिवीत्वादित्यादौ मूलावच्छिन्नवृक्षादौ कपिसंयोगाभावसत्त्वात्तद्वृत्तिवृक्षाद्यव-

कृष्णभट्टीय ।

रूपसम्बन्धावच्छिन्नवृत्तित्वाभावमादाय लक्षणगमनात् धूमस्येति, अतो नाव्याप्तिरिति च। असम्भवप्रकारस्य पूरितत्वादाह—नासंभवश्चेति। तेनेति। संबन्धसामान्येन साध्यवत्तानिवेशे अत्र पूर्वोक्तन्यायेन वह्न्यवयवे धूमान्तरसम्भवात्साध्यतावच्छेदकसमवायसंबन्धेन साध्यवन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य धूमान्तरे असत्त्वेऽपि वह्न्यवयवेन वह्निसमवायिनस्तत्र तादृशाभावस्य पर्वतावच्छेदेन सौलभ्यम्। अन्यथा व्यभिचारित्वानुपपत्तेरिति बोध्यम्। साध्यवत्त्वं चेति। साध्यवत्सामानाधिकरण्याधिकरणतावच्छेदकतावच्छिन्नाभावप्रतियोगित्वस्य साध्यनिष्ठवृत्तित्वाभावस्य लक्षणघटकत्वेऽस्वार्थः। अवच्छेदकतापर्याप्त्युपादानाय साध्यविशिष्टवृत्तित्वाभावव्युदास । तत्प्रतियोगितावच्छेदकतया

न्यायरत्न ।

न्यत्वेनाव्याप्तिप्रसङ्ग इति तन्निवेश इति। तत्र। स्वानुयोग्यधिकरणतावनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकसामान्याभावरूपस्वानुयोग्यधिकरणानवच्छिन्नत्वनिवेशेन द्रव्यं सत्त्वादित्यादावतिव्याप्तिवारणसम्भवादिति निवेशनावश्यकत्वात्। यदपि हेतुतावच्छेदकसम्बन्धेनेति तृतीयान्तं स्वानुयोग्यधिकरणांशे। नान्वेति किन्तु स्वानुयोग्यधिकरणानवच्छिन्नत्वघटकावच्छेदकतायामेवेति न तद्वैयर्थ्यमिति तदपि न। तथा सति "रूपादिनिष्ठनिरूपकाधिकरणतायाः धूमादिप्रतियोगिकनिरूपकाधिकरणतानां भेदसाधकतया तद्वदन्यत्वेन धूमादौ लक्षणगमनमादिति" ग्रन्थविरोधादिति। साध्यवत्त्वं चोपलक्षणविधयेति। तथा च "वह्न्युपलक्षितनिरूपितसमवायादेरवच्छेदकताघटकसम्बन्धत्वं तदुपलक्षणतयाऽवच्छेदकत्वमिति" सिद्धान्तलक्षणे वक्ष्यमाणरीत्या साध्यस्योपलक्षणतयाऽवच्छेदकत्वविवक्षायां साध्योपलक्षिताधिकरणप्रतियोगिकनिरूपितसम्बन्धा-

च्छेदेन एतद्वृक्षादौ कपिसंयोगादिविशिष्टवृत्तित्वाभावसत्त्वेऽपि कपि-संयोगी एतद्वृक्षत्वादित्यादौ वा नाव्याप्तिः । तत्तत्कालदेशावच्छिन्न-तत्तदधिकरणावच्छेदेनापि तत्र तत्र हेतौ तादृशसाध्योपलक्षितत-

कृष्णभट्टीय ।

देशकालावच्छेद्यत्वविशिष्टपर्याप्तत्वात् । सत्तावान् जातेरित्यादौ सत्तासम-वेतत्वाभाव एव लक्षणघटक । उपलक्षणस्यापि प्रतियोगितावच्छेदककोटिप्र-वेशात् । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाच्च । यथ साध्याधिकरणातिरिक्त-विशेषणाविशेषितवृत्तित्वाभाव एव निवेश्य । गुरुधर्मस्य प्रतियोगितावच्छे-दकत्वेऽपि न समवेतत्वाभावप्रत्ययोपपत्तेरिति वाच्यम् । तथासति साध्यस्य व्याप्यप्रकारतापत्ते । साध्यविशिष्टवृत्तित्वाभावस्य लक्षणघटकत्वेऽपि अवच्छेद-कतया निरवच्छिन्नत्वनिवेशाच्च गन्धवान् पृथिवीत्वादित्यादौ अव्याप्तिरिति प्रकाशिकाकृन्मतं निराकर्तुमाह—नत्विति । साध्याधिकरणतावैशिष्ट्यावच्छि-न्नवृत्तित्वाभावनिवेशे निरवच्छिन्नविशेषणनिवेशेन गौरवादिति भाव । निर-वच्छिन्नत्वानुक्तौ विशेषणतया साध्यवत्त्वनिवेशेऽव्याप्तिं प्रदर्शयंल्लक्षणतया तन्निवेशाद्वारणमाह—तेनेत्यादिना । एवमपि । साध्यवत्त्वस्योपलक्षण-त्वेऽपि । देश शिखरादि । कालो वह्निप्रागभावादि, तथाच धूमाधिकरण-तया स्वभावत एव नियतावच्छिन्नतया तन्निरूपकत्वाभावसत्त्वादव्याप्ति-रत निरवच्छिन्नत्वमावश्यकमित्यभिसन्धि । विशिष्टधर्मिपर्याप्तावच्छेदकताया

व्याप्तरत्न ।

वच्छिन्नसाध्याधिकरणनिष्ठावच्छेदकताकवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाव साध्यसामानाधिकरण्याभावपदेन विवक्षणीय । यद्वा स्वावच्छिन्ननिरूपकता-कत्वसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकत्वानिरूपितवृत्तित्वनिष्ठप्रतियोगिताकाभा-वस्तत्पदेन विवक्षणीय । साध्यविशिष्टाधिकरणवृत्तित्वाभावप्रतीतौ च साध्य-स्याधिकरणांशे भासमानस्य धर्मिपारतन्त्र्येण वृत्तित्वरूपप्रतियोग्यंशे भाननियमात्तादृशप्रतीतिविषयाभाव स्वात्तथात्वात् तमादायोत्पत्तिकालीनघटो न घटा-श्रयिणीत्वादित्यादावव्याप्ति । ननु गन्धानधिकरणोत्पत्तिकालविशिष्टपृथिव्या पृथिवीत्वेन गन्धवत्समवेतत्वमिति प्रतीतिर्यथोत्पत्तिकालविशिष्टपृथिव्यवच्छेदेन पृथिवीत्वे गन्धविशिष्टनिरूपितसमवेतत्वाभावमवगाहते तथा धूमनिष्ठवत्ता-सितावच्छेदेन नियम्यधूमासमानकालादिविशिष्टपर्वते धूमे न वह्निमत्संयुक्तत्व-मिति प्रतीतिरपि तादृशविशिष्टपर्वतावच्छेदेन वह्निमत्संयुक्तत्वाभावमवगाहत इति तद्विषयाभावमादायाव्याप्ति । यदि च विशेष्यस्य पर्वतादे प्रतियोग्यवच्छे-दकतया विशिष्टस्य तस्य नाभावावच्छेदकत्वमिति तादृशाभावो धूमादावसिद्ध इत्युच्यते तदा शुद्धपृथिव्या अपि प्रतियोग्यवच्छेदकतया विशिष्टपृथिव्या अभा-वावच्छेदकत्वासम्भवेन तादृशाभावोऽपि पृथिवीत्वादावसिद्ध इत्यधिकरणांशे

तद्धर्मिवृत्तित्वसत्त्वात् । नचैवमपि धूमादौ पर्वतवृत्तेरनवच्छेदको यो देशः कालो वा तदवच्छिन्नपर्वतावच्छेदेन वह्न्यादिमद्वृत्तित्वाभावस्य धूमादौ सत्त्वादव्याप्तिर्दुर्वारैवेति वाच्यम् । तत्तद्देशकालावच्छिन्नपर्वतादेर्धूमाद्यसंबन्धितया धूमादावभाववृत्तावपि तादृशस्यानवच्छेदकत्वात् । नचैवमुत्पत्तिक्षणविशिष्टपर्वते न वह्निमत्संयुक्तत्व(मित्यादि)मिति प्रतीत्यनुपपत्तिः । द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमित्यादिवदुक्तप्रतीतेः सामानाधिकरण्यावच्छेदकत्वाभावावगाहनतया न संभवति विशेषणस्यावच्छेदकत्वे विशिष्टस्यानवच्छेदकत्वासंभवादिति वाच्यम् । तादृशप्रतीतीनां सामानाधिकरण्ये विशिष्टपर्वतावच्छेद्यत्वाभावावगाहित्वेनैवोपपत्तेः । उत्पत्तिक्षणे पर्वते धूमस्य

कृष्णंभट्टीयं ।

विशिष्टधर्म्यनुयोगिकसंबन्धनियतत्वमित्याशयेन समाधत्ते । तत्तद्देशेति । यत्र देशकालान्तरावच्छेदेन धूमसंबन्धित्वं तत्कालावच्छेदेन संबन्धस्यैव तत्कालावच्छिन्नावच्छेदकतानियामकत्वात् । तथाच धूमनिष्ठाभावस्य हेत्वधिकरणावच्छिन्नत्वं नास्तीति भावः । नचैवमपि शिखराद्यवच्छिन्नपर्वतस्य कालिकसंबन्धेन साध्यवद्वृत्तित्वाभावानुयोगिधूमवत्त्वात्कथं नावच्छेदकत्वमिति वाच्यम् । तदवच्छेदकतायां देशविधया तन्निवेशात् तदवच्छिन्नतत्संबन्धावच्छिन्नाधिकरणताया एव तद्विशिष्टधर्मनिरूपिततदवच्छिन्नतत्संबन्धावच्छिन्नावच्छेदकतानियामकत्वनियमः ।
एतेन रूपवान् रसादित्यादावव्याप्तिवारणायेव निरवच्छिन्नत्वमित्यपास्तम् । यत्कालावच्छेदेनावच्छेद्याधिकरणसंबन्धिता तत्कालावच्छेदेन हेतौ साध्यव-

न्यायरत्नं ।

साध्यस्योत्पत्तिक्षणावच्छेदकत्वनिवेशो विरर्थक इत्यभिप्रायेण शङ्कते—नचैवमपि धूमादाविति । एवं विशेष्यस्य प्रतियोग्यनवच्छेदकत्वेऽपि किंचिद्रूपेणाभावावच्छेदकत्वे । अनवच्छेदकत्वादिति । अवच्छेदकघटकीभूतविशेषणविशेष्ययोरनवच्छेदकतया भाने तयोरवच्छेद्याधिकरणाधिकरणत्व नियामकमन्यथा तद्विशिष्टपर्वते धूमे न वह्निमत्संयुक्तत्वमिति प्रतीत्यापत्ते । एवं च धूमवृत्तितानवच्छेदकदेशकालयोरनवच्छेद्याधिकरणधूमाधिकरणत्वाद्धूमादौ तादृशाभावाप्रसिद्धा न तमादायाव्याप्तिरुत्पत्तिक्षणपृथिव्यां पृथिवीत्वस्य नियततयाऽवच्छेद्याधिकरणतदधिकरणत्वसमवेनोत्पत्तिक्षणविशिष्टपृथिव्यां पृथिवीत्वेन गन्धविशिष्टसमवेतत्वमिति प्रतीतिसंभवादधिकरणादौ साध्यस्योत्पत्तिक्षणतयाऽवच्छेदकत्वनिक्षणं सार्थकमिति भाव । न चैवमिति । एवं विशिष्टस्यावच्छेदकत्वे विशेषण-

मात्रावच्छिन्नत्वनिवेशनं येषांचिदनुपादेयमेव । तथासति वह्न्यादि-

कूप्यांमहीयं ।

स्यात् । संयोगेन व्यभिचारीणि धूमवान् वह्नेरित्यत्रैव । ननु कालिकसंब-न्धेन व्यभिचारिण्यपि । तथावच्छेदकतायाः कालिकसंबन्धावच्छिन्नत्वहेतु-तावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावनिवेशो बोध्य । एवंच वह्निमान् धूमादित्यादौ कालिकेन हेतौ परमाणोर्व्यणुकधूमनिष्ठसाध्यसामानाधिकर-ण्याभावीयसमवायसम्बन्धावच्छिन्नावच्छेदकत्वावतः कालिकसंबन्धेन हेतुव्-याप्त्येऽपि न क्षतिः । संयोगेन व्यभिचारिसमत्वात् । यद्यपि चैवसति उत्पत्ति क्षणपर्यंतयो धूमनिष्ठसाध्यसामानाधिकरण्याभावावच्छेदकत्वे पर्वतनिष्ठाव-च्छेदकताया एतादृशविशेषणवत्तया हेत्वधिकरणताव्याप्यत्वेन व्याप्तिता-वच्छेदकमात्रपदं व्यर्थं । तदापि प्रतियोग्यवच्छेदके पर्वते तदभावानवच्छेद-कत्वं न स्यात् । पर्वते तत्काले धूमस्य संयोगात्त्वात् । अतः कालिकसंबन्ध एवावच्छेदकतानियामको वाच्यः । तथाच पर्वतनिष्ठावच्छेदकताया नोभ-याभावत्वमिति व्याप्तिः । यदि च पूर्वमुत्पत्तिक्षणविषया पर्वतस्यावच्छेद-कत्वाभिमानादिदानीं सिद्धान्ते च तदनङ्गीकारे विरोध तदा पर्वतधूमयो संयोग एवावच्छेदकतानियामकः सिद्धान्ते प्रतियोग्यवच्छेदकतया अभावा-वच्छेदकता नास्ति एतन्मते कालनिष्ठावच्छेदकतासाचिव्येन नास्तीति विशेष इति मन्यते । तदा कालिकसम्बन्धावच्छिन्नत्वहेतुतावच्छेदकसम्बन्धाव-च्छिन्नत्वोत्पत्तिक्षणत्वावच्छिन्नत्वेतत्रितयाभाव एवावच्छेदकताया निवेश्य । तथासति पर्वतनिष्ठावच्छेदकतायां कालिकसम्बन्धावच्छिन्नत्वेन उत्पत्तिक्षण-निष्ठावच्छेदकताया उत्पत्तिक्षणत्वावच्छिन्नत्वेन त्रितयाभावसत्त्वेऽपि हेतुव्-याप्त्योत्पत्तिक्षणसत्त्वेन हेत्वधिकरणत्वस्य तद्व्यापकत्वासत्त्वाद्व्याप्तिः । उभयाभाव-त्रितयाभावविशेषितवह्निविशेषितकल्पयोर्बीजमाह—तथासतीति । यदिच

न्यायरत्न ।

सिद्धेः । अत एव हेत्वधिकरणनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वसहि-तहेत्वधिकरणनिष्ठावच्छेदकतानिरूपकत्व तदितरमपि न । सर्वस्या अन्यावच्छेदक-तया हेत्वधिकरणनिष्ठतात्तदन्यावच्छेदकतायास्तत्राप्रसिद्धत्वात् । अत्र हेत्व-धिकरणनिष्ठा देशविधया याऽवच्छेदकता तदन्यावच्छेदकत्वानिरूपकत्वादिरेव तदिति नोक्तस्थलेऽव्याप्तिरिति वाच्यम् । एव सति तथा सतीत्यादिना चरमसा-णातिव्याप्त्यसंभव । रूपादिनिष्ठाधिकरणतायामप्ययोगोलके रूपेण धूमवत्त्वयुक्त-त्वमिदानीं रूपेण धूमवत्त्वयुक्तत्वमिति प्रतीतिभ्यामयोगोलकोत्पत्तिकालोभयाव-च्छिन्नत्वावगाहनात्तादृशाधिकरणताया अप्रसिद्धेः । एतेन स्वावच्छेदकाव्या-पकहेत्वधिकरणतावत्त्वमेव तदिति निरस्तम् । यदि च गगनादिनिष्ठाधिकरणतैव तादृशीत्युच्यते तदा वह्निमान्धूमादित्यादावपि तस्या एव प्रसिद्धत्वात्तैव सम-न्वान्तरेण वर्तमान इति ग्रन्थविरोध इति चेन । तादृशग्रन्थस्य यथाश्रुताभिप्रा-

यो व्याप्यवृत्तिरेवेति तत्राधिकरणविशेषस्यावच्छेदकत्वं निर्युक्तिकं प्रतियोगिमति अभाववृत्तावेव विरोधभञ्जनार्थं अवच्छेदकभेदापेक्षणात्। धूमवत्कपालादिसमवेत एव वह्निमन्महानससंयुक्तघटादौ महानसाद्यवच्छेदेन वह्निमत्संयुक्तत्ववति हेतुमत्कपालाद्यवच्छेदेन वह्निमत्संयुक्तत्वाभावसौलभ्येऽपि एतद्रूपवानेतद्रसादित्यादौ एतद्रूपादिमत्समवेतत्ववति हेत्वधिकरणावच्छेदेन प्रतियोगिसत्त्वात्तदवच्छेदेन साध्यासामानाधिकरण्याभावस्यासम्भवात्। एतद्रूपादिमति सम्बन्धान्तरमात्रेण वर्तमाने साध्यवत्समवेतत्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणानवच्छिन्नत्वविरहेण निरुक्ताभावाप्रसिद्धेर्दुर्वारत्वादिति वाच्यम्। पर्वते रूपे न वह्निमत्संयुक्तत्वमिति प्रतीतिबलेन व्याप्यवृत्तेरपि साध्यासामानाधिकरण्याभावाधिकरणविशेषावच्छिन्नत्वोपगमात्। यत्तु व्याप्यवृत्तेरभावस्याधिकरणविशेषावच्छिन्नत्वानुपगमे हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये हेत्वनुयोगिकत्वहेत्वधिकरणविशेषावच्छिन्नत्वोभयाभावो विवक्षणीयः। तथाच धूमादिनिष्ठसाध्यवदवृत्त्यवच्छिन्नतदधिकरणताया हेतुतावच्छेदकसम्बन्धेन हेतुमदवच्छिन्नत्वस्य रूपादिनिष्ठवह्निमत्संयुक्तत्वाद्यभावाधिकरणताया घटादिनिष्ठधूमवत्कपालावच्छिन्नतदधिकरणताया च हेत्वनुयोगिक-

कृष्णमहीय ।

त्वमित्याधिकर्तुं । न तु तद्रूपप्रागभाववान् तद्रूपध्वंसवानित्यादौ हेतौ साध्यविशिष्टवृत्तित्वाभावस्याद्व्याप्तिरिति । तथ, तत्र कालविशेषस्यावच्छेदकघटकत्वात् । तद्रूपध्वंसे प्रागवृत्ति वस्त्वावच्छेदककालावच्छिन्नघटस्य तद्रूपस्वत्वाच्च तत्तत्तत्रीत्वेवोपपत्तौ विशेषणवैयर्थ्यमस्वरस । व्याप्यवृत्तेरनावच्छेदकमिति वादिनां निष्कर्षमुत्थापयति । यत्त्विति । अयोगोलकवृत्ति-

न्यायरत्न ।

त्वकतानिरूपितहेत्वधिकरणनिष्ठावच्छेदकतापेक्षया । अनाहुरित्यस्वरस तद्बीजं तु रूपनिष्ठवह्निमत्संयुक्तत्वाभावाधिकरणतावच्छेदकतायां पर्वतनिष्ठायामपि पर्वतत्वस्यावच्छेदकत्वमाऽवच्छेदकान्तरानवच्छिन्नहेत्वधिकरणनिष्ठावच्छेदकत्वाप्रसिद्ध्याऽसम्भव । अवच्छेदकान्तरनिष्ठनिरूपणावच्छेदकतानिवेशेऽपि तत्तद्धान्तरकालावच्छिन्नपर्वतादेस्तत्क्षणत्वकत्वमापेक्षया तत्तदवान्तरकालस्यैव तत्सम्बन्धेनोत्पत्तिक्षणनिष्ठावच्छेदकताया अवच्छेदकान्तरानवच्छिन्नत्वाऽसम्भवाद्व्याप्तिरिति । यत्त्विति । अयोगोलकवृत्तिरूपादिनिष्ठाधिकरणतायामुभयाभाव-

**व्यभिचारिण(स्तु)श्च व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्त्वम् ।**

---

रयस्याभवेन्नोभयाभावस(व)त्त्वाल्लक्षणसमन्वय इति तन्न । व्याप्यवृत्तेरवच्छेदकानुगमे पृथिवी रूपादित्यादावव्याप्तिः । पृथिवीत्वादिव्यभिचारिजलीयरूपादिनिष्ठसाध्यासामानाधिकरण्याभावस्य व्याप्यवृत्तितया तदधिकरणतासामान्ये निरुक्तोभयाभावस्याक्षतत्वात् । हेत्वधिकरणावच्छिन्नत्वोभयाभावस्यैव तत्र निवेशनीयत्वान्नायं दोषः । जलरूपनिष्ठपृथिवीसमवेतत्वाभावाधिकरणतायाः अवच्छिन्नत्वविरहेणोभयाभावसत्त्वात् । एवंच तावतैवोपदर्शिताप्रसिद्धेरपि निवारितत्वात् । तादृशोभयाभाववदधिकरणतावदन्यत्वमेव निवेशनीयम् । न तूक्ताधिकरणतासामान्ये हेत्वनुयोगिकत्वतादृशोभयाभाववत्त्वोभयाभावः प्रयोजनविरहादिति चेदेवमपि वक्ष्यमाणायाः कालिकादिसम्बन्धेन हेतावव्याप्तेरसङ्गतिर्दुर्वारैवेति । तत्र कालिकसम्बन्धेनावृत्तिगगनादावेव दर्शितोभयाभाववत्साध्यसामानाधिकरण्याभावाधिकरणतायाः प्रसिद्धेः । अवृत्त्यादेव सर्वत्र तादृशाभावप्रसिद्ध्या सम्बन्धान्तरेण वर्तमानपर्यन्तानुधावनविरोधश्च । तस्माद्व्याप्यवृत्तेरव्यवच्छेदकत्वमेव ग्रन्थकारानुमतमित्यवधेयम् । द्रव्यं सत्त्वादित्यादावाशङ्कितामतिव्याप्तिमुद्धरति । **व्यभिचारिणश्चेति । तादृशीति ।** हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थः । अवच्छेदकत्व सम्बन्धः । **तादृशाभाववत्त्वम् ।** हेतुतावच्छेदकसम्बन्धेन साध्याभावव-

कृष्णभट्टीय ।

णादिनिष्ठधूमवद्वृत्त्यभाववत्तावासुभयाभाववत्त्वादतिव्याप्तेः सामान्यपदम् । तदर्थो व्यापकत्वं तथाच तादृशाधिकरणत्वव्यापक॰ हेत्वनुयोगिकत्वयद्धर्मावच्छिन्नाधिकरणविशेषावच्छिन्न वोभयाभाव तद्धर्मवत्त्वमित्यर्थं । धूमादिरूपादिनिष्ठेत्यादि तदुभयप्रयोजनम् । नच धूमावयवान्तरसंयुक्तस्वावयवावच्छेदेनेत्यादिरीत्या व्याप्ति । दलद्वयेऽपि तद्व्यक्तित्वात्मकैकधर्मस्यैव यद्धर्मपदेनोपादानात् पुनरुक्ते तादृशस्वानयनस्यासत्त्वाच्च धूमान्तरेण कृत्यनिरामक-

न्यायरत्न ।

सत्त्वादतिव्याप्ते सामान्यपदम् । **पृथिवीरूपादित्यादाविति ।** यद्यपि धूमवान् वह्नेरित्यादावप्ययोगोलकीयवह्निनिष्ठताऽशाधिकरणताया व्याप्यवृत्तितया-

---

१ स्वत्वान अवच्छिन्नत्वद्वत्वधिकरणा नवच्छिन्नत्व वा पा

सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतेः । नचैवं विशिष्टसत्त्वेऽव्याप्तिः । विशिष्टस्यातिरिक्तत्वात् ।

---

वृत्तित्वाभाववत्त्वम् । अत्र प्रमाणाकाङ्क्षायामाह—सत्तायामिति । ईदृशप्रतीत्या द्रव्यत्वसामानाधिकरण्यवत्त्वामपि सत्तायां तदनवच्छेदकगुणाद्यवच्छेदेन तदभाववत्त्वावगाहनादिति भावः । एवं सत्तायां द्रव्यत्वसामानाधिकरण्याभावोपगमे । विशिष्टसत्त्वे गुणान्यत्वविशिष्टसत्तात्वावच्छिन्ने । अव्याप्तिरिति । गुणाद्यवच्छेदेन साध्यसामानाधिकरण्याभाववति केनापि रूपेण तदनधिकरणत्वासंभवादिति भावः । विशिष्टस्येति । तथाच विशिष्टसत्त्वं द्रव्यमात्रवृत्तित्वदधिकरणत्वं न गुणादेरिति न हेत्वधिकरणावच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववत्त्वमिति नाव्याप्तिरिति भावः । यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छिन्नत्वं निवेश्यापीयमव्याप्तिः शक्यते वारयितुं तथापि प्रकारान्तरेण वारणसंभवे अधिकनिवेशनमनुचितं इत्यभिप्रेत्य विशिष्टातिरिक्तत्वपक्ष आश्रितः । नच हेतुतावच्छेदकविशिष्टाधिकरणतानिवेशनमवश्यकम् । अन्यथा इदं स्पर्शवत् भूतत्वमूर्तत्वोभयवत्त्वादित्यादौ भूतत्वे मूर्तत्वे च हेतौ स्वाधिकरणे गगने मनसि च साध्यसामानाधिकरण्यविरहेणाव्याप्तिप्रसङ्गादिति वाच्यम् । उभयत्वस्य एकविशिष्टापरत्वरूपतामवलम्ब्य विशिष्टस्यातिरिक्ततया तत्र स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासंबन्धे-

वृत्त्यभावीय ।

एव संयोग. हेत्वधिकरणताच लक्षणघटितेयुक्तिसंभवात् । धूमवान् वह्नेरित्यादौ धूमवत्साधारणवह्निसंभवाद्यातिव्याप्तिरत पृथिवीति । शङ्कते—हेत्वधीति । जलेति । क्षितिजलोभयवृत्तिद्वित्वे क्षितिमात्रवृत्तिघटवद्वृत्तित्वसत्तायां हेत्वधिकरणावच्छिन्नत्वप्रसिद्धि । ईदृशेति । अत्र सत्ता द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावविशेष्यकाधेयतासंबन्धावच्छिन्नप्रमाविषयत्वात् । यो यद्विशेष्यकप्रमाप्रकार. स तद्वानिति व्याप्तेरिति प्रयोग । केनापीति । विशेष्यवृत्तिवृत्तिप्रतियोगितावच्छेदकत्वनाक्रमेदानुयोगितात्वा विशिष्टे भवदीकारात् । विरुद्धविशिष्टोभयत्वस्यैक विशिष्टापरत्वरूपत्वासंभवादुभयत्वमात्रस्यैवातिरिक्तत्व स्वीकृत्य नस्यैव हेतुत्व स्वीकुर्यामिति समाधानतरमाह—

---

१ अनुभवात् क. पा. २ गुणकर्मान्यत्वविशिष्ट ना. पा.

नोभयत्वस्यैव वा तत्राव्याप्तेः समाधानसंभवात् । ननु द्रव्यं गुणान्यत्वे सति सत्त्वादित्यादौ विशिष्टातिरिक्तत्वापक्षमवलम्ब्याव्याप्तेर्वारणं न विचारसहम् । तथाहि । गुणादिवृत्तिसत्तादितो गुणान्यत्वविशिष्टसत्तादेरतिरिक्तत्वेऽनुगतधर्ममात्रोच्छेदः । एकव्यक्तिवृत्तित्वविशिष्टस्य अपरव्यक्तिवृत्तित्वासत्त्वात् । न च तत्तद्व्यक्तिवृत्तित्वविशिष्टसत्तादीनां मिथो भेदेऽपि शुद्धसत्तादिकमनुगतं निराबाधमेवेति वाच्यम् । शुद्धसत्तादौ तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्याभ्युपगमे भवतां तद्वैफल्यासंभवात् । तदनभ्युपगमे सत्तावृत्तित्वप्रसङ्गात् । एवं सर्वेषामेव वस्तूनां तत्तत्क्षणादिवृत्तित्वरूपविशेषणभेदाद्भेदप्रसक्त्या क्षणभङ्गापत्तिपर्यवसान(नं दुर्वार)मेव । अथ प्रत्यभिज्ञाद्यनुरोधेन एकस्मिन्नानादेशकालवृत्तित्ववैशिष्ट्यं स्वीक्रियत एव । परन्तु गुणे द्रव्यवृत्तित्वविशिष्टसत्ता नास्ति इदानीं पूर्वक्षणवृत्तित्वविशिष्टघटत्वं नास्तीति प्रतीत्यनुरोधेन मिथो भिन्ना अपि तत्तद्वि(शेषणवि)शिष्टसत्त्वत्वादयः स्वीक्रियन्ते । तदनवलम्बनतयैवैतादृशप्रतीत्यनुपपत्तेः । द्रव्यवृत्तित्ववैशिष्ट्यपुरस्कारेण चानुगतसत्त्वादेर्द्रव्यत्वानुमापकता न स्वीक्रियते।अपितु तदन्यतादृशविशेषणविशिष्टस्य गुणाद्यवृत्तिवस्तुन एवेति तत्र द्रव्यत्वादिव्याप्तिविरहेऽपि न क्षतिरिति चेत्तादृशवस्तूनां केन रूपेण व्याप्यता । न द्रव्यवृत्तित्वविशिष्टत्वेन तादृशरूपस्याव्याप्यानुगतधर्मसाधारण्यात् । नापि तादृशविशेषणविशिष्टतत्तद्व्यक्तित्वादिना तादृशविशेषणवैशिष्ट्यांशस्य वैयर्थ्यात् । तद्व्यक्तित्वानुपस्थितावनुमानानिर्वाहाच्च । एवं विशिष्टसत्ता नास्तीत्यत्र विशिष्टस्याप्यवच्छिन्नाभावस्य न विषयतासंभवः तद्रूपावच्छिन्नानुगतसत्तावति तद्रूपावच्छिन्नाभावा-

कृष्णंभट्टीयं ।

त्वेनेति । ननु यथा परंपरासंबन्धेनोभयत्वस्य हेतुत्वं तथा विशिष्टानतिरिक्तत्वेऽपि वैशिष्ट्यस्यापि स्वावच्छिन्ननिरूपितसमवायेन हेतुत्वं वक्तुं शक्यत इति चेदिदमेवानतिरेकेऽपीत्यादिना उद्भाव्यं । इदानीं विहितमित्यदोषः । न केवलमनुगतधर्ममात्रोच्छेदमसमंजसं किंत्वन्यदपीत्याह—एवमिति । अनुगतधर्ममात्रोच्छेदं क्षणभङ्गापत्तिपर्यवसानं चोद्धृत्य विशिष्टशब्दवाच्यवस्तुनोऽतिरिक्तत्वं व्यवस्थापयति । परंत्विति । न द्रव्यत्वेति । तस्य एव गुणादौ सत्त्वेन व्यभिचारित्वात् । वस्तुन एवेति । केन रूपेण तादृशवस्तुनो हेतुतेति चेदिदानीं रूपविवेचनं नास्त्येवेति बोध्यम् । धर्मः सत्तादिः । वैशिष्ट्यांशत्यागेऽप्याह—तद्व्यक्तित्वादिति । विशिष्टसत्ता नास्तीति प्रत्य-

१ हेतुत्व स्वीकृतैव वा. मै. पा.

अनतिरेके तु विशेषणविशेष्यसंबन्धस्यैव परंपरया व्या(प्त)-
प्यत्वात् ।

---

संभवात् । नापि तत्तद्व्यक्तित्वावच्छिन्नाभावस्य तत्तद्व्यक्तित्वस्य प्रतियोगितावच्छेदककोटावनुप्रवेशात् । विशेषणावच्छिन्नप्रतियोगिकसंबन्धो विलक्षणः स च नानुगतसत्तायाः संबन्धः, अपितु अतिरिक्तविशिष्टसत्ताया एवेति प्रतियोगितावच्छेदकधर्मस्य गुणादिवृत्तिसत्तासाधारण्येऽपि तत्र विशिष्टभावोऽस्त्वेव। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकशून्यत्वमात्रस्य विशिष्टाभावसत्त्वेऽपि स्थितत्वादिति चेत्तर्हि गुणादिसत्ताया एवातिरिक्तसंबन्धो गुणादिकथाभूतः स्वीक्रियतां किं संबन्धान्तरकल्पनेनेत्यभिप्रेत्याह । अनतिरेकेत्विति । विशेषणविशेष्यसंबन्धस्यैवेति । सत्वनिष्ठगुणान्यत्ववैशिष्ट्यस्यैवेत्यर्थः । परंपरया । परंपरासंबन्धेन स्वावच्छिन्ननिरूपितसमवायादिसंबन्धेनेति यावत् । व्याप्यत्वादिति । गुणान्यत्ववैशिष्ट्यावच्छिन्नायाः अधिकरणताया गुणादावसत्त्वात् । तादृशसंबन्धेन तद्वैशिष्ट्यस्य द्रव्यमात्रवृत्तित्वादिति भावः । एवकारेण सत्तायाः व्यवच्छेदः । यत्र विशेषणविशेष्यावच्छिन्नसत्ताहेतुकद्रव्यत्वानुमितिरभिमता तत्तद्वैशिष्ट्यहेतुकानुमितिरेवोपेयते वैशिष्ट्यपरंपरासंबन्धेन व्याप्तिधीविरहे चानुमितिरप्रसिद्धैवेति भावः । यद्यपि विशिष्टनिरूपितस्य विलक्षणत्वे तादृशसंबन्धेन सत्ताया अपि व्याप्यत्वं निर्वहति । तथापि विशेषणावच्छिन्ननिरूपितसमवायत्वादिना न सत्तादिसंबन्धता किंतु

कृष्णंभट्टीयं ।

पक्ष स्वावच्छिन्नाभावावलम्बनता न स्वीक्रियते । अपितु विशिष्टाभावावलम्बनेत्याशङ्कते । विशेषणेति । तर्हीति । गुणादिव्यावृत्त इति । गुणो विशिष्टसत्तावानिति प्रतीतिनिरासाय सत्ताया इति षष्ठीसंबन्धघटकत्वप्रतियोगिकत्वमात्रायां सत्तासंबन्धतायां अनुपपन्नमेव निराकरणात् । यद्यपीति । एवंच विशेषणविशेष्यसंबन्धस्य व्याप्यत्वानुसारणं व्यर्थमिति भावः । न सत्तादीति । अन्यथा कदाचित् गुणः सत्तावानिति प्रत्ययस्य प्रमात्वमपि स्यात् । नन्वेवं समवायप्रागभावस्य सत्तासंबन्धत्वे गुणो विशिष्टसत्तावानिति प्रमात्वप्रसंग इत्याह—किं त्विति ।

---

१ अनतिरिक्ते तु का. पा.    २ संबन्धान्तरकल्पनेनेति मै. पा.

केवलान्वयिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणे-त्याहुः ।

---

विशिष्टसत्तावानिति प्रत्यये वैशिष्ट्यस्यैव सत्तादिविशेषणतापन्नस्य निरुक्तपरम्परासम्बन्धेन धर्मिणि विशेषणत्वोपगमात्रातिप्रसङ्ग इत्याश-येनेदमभिहितम् । नन्वेवरीत्या प्रथमलक्षणपरिष्कारे वक्ष्यमाणरीत्या-न्वयिसाध्यकाव्याप्त्यप्रसक्तिः । तत्रापि सम्बन्धान्तरेण हेतुमद्वृत्ती हेत्वधिकरणानवच्छिन्नसाध्यसामानाधिकरण्याभावप्रसिद्ध्या लक्षणग-मनसम्भवादत आह—केवलान्वयिनीति । द्वितीयलक्षणेति । न च तद्वेत्यनेनोभयत्वावच्छिन्नस्यैव परामर्शात्प्रथमलक्षणेऽव्याप्त्यसम-वेऽसङ्गतिर्दुर्वारैवेति वाच्यम्, केवलान्वयिसाध्यके धूमे चाव्याप्तिप्रद-र्शनात् तदुभयत्वेनोपस्थितप्रथमलक्षणेऽव्याप्त्यसम्भवेऽपि लक्षणद्वये यथायोग तत्तत्स्थले व्याप्त्यन्वये तात्पर्यात् । यद्यपि धूमवाद्यपि सा-ध्यसामानाधिकरण्यसामान्याभावघटितस्य प्रथमलक्षणार्थस्य नाव्या-प्त्यवकाशः । तथापि यत्किञ्चित्साध्यकत्वविशेषाभिप्रायेण

कृष्णभट्टीय ।

सत्तादिविशेषणतेति । द्रव्य वैशिष्ट्यवदित्यप्रत्ययात् । नातिप्रसङ्गः न गुणो गुणान्यत्वविशिष्टसत्तावानिति प्रत्ययस्य प्रमात्वप्रसङ्गः । तथाच विशेष्यस्य शुद्धसत्त्वस्य इति वैशिष्ट्यस्य साध्यव्याप्यत्वमनुगतमिति भाव । यद्यपि विशिष्टसत्तानिरूपितसम्बन्धो विशिष्टाधारतादि तादात्म्य तेन सम्बन्धेन सत्तावानिति प्रत्यय गुणो विशिष्टसत्तावानिति प्रत्ययश्च प्रकारता-वच्छेदकत्वेन वैशिष्ट्यभान एव सम्भव प्रमाणमिति विपरीतपेक्ष पार्थक्य । एवञ्च तेन सम्बन्धेन विशिष्टसत्ताया अपि व्याप्यत्व सम्भवतीति वैशिष्ट्यस्य-वेन्वयकारवैयर्थ्यम् । तथापि सम्बन्धो न सार्वभौमसम्मत इति प्रदर्श-नार्थतया अतएवाग्रयेनेत्युक्तम् । द्वितीयलक्षणे साध्यसामान्यभेदनि-वेशे धूम इत्युक्तस्थलेऽपि स्यात् अव्याप्त्यभावात् । अतस्तद्व्याप्तेविशेष-निवेशाभिप्रायकत्व वाच्यम् । तथासति प्रदीप्ता प्रथमलक्षणाव्याप्ति-रिति दुर्वारत्वेनाशयेन समाधत्ते—तथापीति । यत्किञ्चित साध्यवति

व्याप्तस्य ।

वृत्तिमत्त्वाभिधेयत्वादेः धूमाधिकरणवृत्तिघटाभावादौ केवलान्वयिसाध्यकत्वेऽपि (illegible)न्नस्य । ननु उक्तरूपयोः लक्षणयोः विशेषावच्छेदेऽपि व्याप्त्यप्रसक्ति-र्भवति इत्याकाङ्क्षायामाह तात्पर्यमाह—यथेति ।

**तच्चिन्त्यम् । सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परंपरासंबन्धेन सामानाधिकरण्यस्य वा अभावं गुणेऽवगाहते । ननु सत्तायामेव द्रव्यवृत्तित्वाभावं ।**

---

द्वितीयलक्षणस्यैव यत्किञ्चित्साध्यसामानाधिकरण्याभावनिवेशाभिप्रायेणैव प्रथमलक्षणस्यापि नानाव्यक्तिसाध्यकस्थलेऽव्याप्तिप्रदर्शनमनिरस्तम् । मूले च यत्किञ्चित्साध्यानधिकरणाधिकरण इत्युपलक्षणम् । यत्किञ्चित्साध्याधिकरणावृत्तित्वमपि बोध्यम् । तेन प्रथमलक्षणाव्याप्तिसंपादकहेतुत्वकथनान्यूनत्वस्य नावकाश इति ध्येयम् । सामानाधिकरण्यस्याव्याप्यवृत्तितायां प्रमाणसिद्धायामेव दर्शितातिव्याप्तिर्निवारयितुं शक्यते । तत्रैव न प्रमाणं उक्तप्रतीतेरन्यविषयकत्वादित्याह— **सत्तायामिति** । प्रतीतिर्हि इति । अभावं गुणेऽवगाहते इत्यमिमेणान्वयः । अवच्छेदकत्वस्येति । निरूपकत्वस्येत्यर्थः । तेन सामानाधिकरण्यस्य व्याप्यवृत्तित्वमते तदवच्छेदकत्वस्य प्रामाणिकत्वेऽपि न क्षतिः । उक्ताकारप्रतीतौ अवच्छेदकत्वानुल्लेखात् । अवच्छेदकत्वाभावावगाहित्वं न संभवतीत्याशङ्क्याह— **परंपरेति** । ननु परंपरासंबन्धो न वृत्तिनियामकः । आकाशं द्रव्यत्वसामानाधिकरण्यवदित्यप्रमत्वमात् इति उक्तसंबन्धावच्छिन्नाभाव एवाप्रामाणिक इति तादृशाभावावलम्बनतापि नोक्तप्रतीतेः संभवतीत्याशङ्कोद्धारायानुरूपद-

कृष्णभट्टीय ।

बोध्यम् । विशिष्टानतिरिक्ततामते साध्यतावच्छेदकावच्छिन्नप्रतियोगिकाभाव विशिष्टसत्तादिसाध्यकव्याप्तिवारणात् तदतिरिक्ततामते तु लक्षणद्वयेऽपि साध्य एव तद्विशेषोऽपि न क्षतिः । नानाधिकरणकेति दीधितिदर्शनात् तत्रापि साध्यसन्येव वा तत् । आकाशमिति । सत्तायां गगनान्तर्भावेन द्रव्यत्वसामानाधिकरण्यात् । यतो द्रव्यत्वसामानाधिकरण्यवानिति

न्यायरत्न ।

न केवलमनुगतधर्मानोच्छेदः किंत्वन्यदपीत्याह—**एवमिति** । केचित् ननु विशिष्टसत्तानिष्ठतद्व्यक्तित्वानुपस्थितिदशायां नानुमितिरनुभवसिद्धेत्यत आह—

सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावो न सत्तावृ-

---

ग्रान्तमाह—द्रव्यत्वे इति। गुणस्यावच्छेदकत्वानियामकद्रव्यत्वस-म्बन्धशून्यतया द्रव्यत्वनिष्ठाभावावच्छेदकत्वं न समवतीत्यगत्या गुण-निष्ठो द्रव्यत्वपृथिवीत्वसामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्ब-न्धावच्छिन्नतादृशसामानाधिकरण्याभाव एव तादृशप्रतीतिविषय इति अवश्यं उपेयम्। तद्वदत्रापीत्यर्थः। स्वरसतो यादृशशब्दात् यादृशार्थः प्रतीयते तादृशशब्दोल्लिखितप्रत्यये तादृशार्थविषयकत्वमे-वास्तीति बाधके युज्यत इत्याशयेन दर्शितप्रतीतेः सत्तायां गुणाव-च्छिन्नद्रव्यवृत्तित्वाभावावगाहितायां बाधकप्रतीतिमाह—सत्ता न-द्रव्यवृत्तित्वाभाववतीति। नच द्रव्यवृत्तित्वाभावाभावस्य द्रव्यवृ-त्तित्वरूपस्य सत्तायामसम्भवेऽपि सत्तात्वम्। नैवमस्याः प्रतीतेर्बाधक-त्वं सम्भवति विरोध्यविषयकत्वादिति वाच्यम्। तादृशशब्देन द्रव्य-वृत्तित्वाभावत्वावच्छेदस्यैव प्रत्ययनात्। अपरप्रतीतेरपि तद्वत्त्वावगाहित-

कृष्णभट्टीय।

सामान्याकारस्य सर्वमतसिद्धत्वात्तन्न दोषः। गुणस्येति। समवायरू-पतादृशसम्बन्धशून्यत्वमुक्तं, सामान्यतः तादृशसम्बन्धशून्यत्वे तु नित्य-गुणे दोषः। कालिकसम्बन्धस्य अन्यगुणे सत्त्वात्। अथवा कालिक-सम्बन्धस्यावच्छेदकत्वानियामकत्वे इदमिदानीमिति प्रत्ययः स्यात्। नच कालिकसम्बन्धेनावच्छेदकस्यापि पूर्वोक्तयुक्त्या देशविषया अवच्छेदकत्व-स्वीकार इति वाच्यम्। सकलकाले आत्मत्वाकाशत्वोभयसामानाधिकर-ण्यसम्बन्धेन निरवच्छिन्नतया अधाभावविरहाद्दुष्कव्याप्तेरप्रयोजकत्वात्। का-लिकाव्याप्यवृत्तित्वापत्तिविरहात्। तस्कल्पस्य सिद्धान्तविरुद्धत्वादित्यर्थे-यम्। अनुमपमितेति। वृत्तिनियामकसम्बन्धावच्छिन्नाभावास्वीकारे। अन्यथा द्रव्यत्वनिष्ठपृथिवीत्वसामानाधिकरण्ये गुणनिरूपितत्वमर्थो बोध्य। कदाचित् वृत्तिनियामकसम्बन्धावच्छिन्नाभावो भवतु। सत्तायां गुणे न द्रव्य-वृत्तित्वमित्याकारानुरोधात्। सम्बन्धाव्यवृत्त्यभाव इति सूचनाय तदुक्तम्। सत्ता नेत्यादिकं न दूषणान्तरं प्रकाराभावात्। अतो दृष्टान्तेऽस्तु बाधकप्र-तीतान्यथोपपादनं प्रकृते किं बाधकमित्याकाङ्क्षायामिदमित्याशयेनावतार

न्यायरत्न।

पयमिति। द्रव्यवृत्तित्वाभावच्छेदस्यैवेति। तद्बोधकसमानविभक्तिक-प्रातिपदिकद्वयोपस्थाप्यकद्वयसमभिव्याहारप्रभावादिति भावः। अर्थान्तरमाह—

या बाधकत्वात् भेदस्याव्याप्यवृत्तिताविरहेण सामानाधिकरण्याभावबुद्धेस्तस्य तदभावविरोधित्वात् । यदि च भेदस्याव्याप्यवृत्तित्वमतमवलम्ब्य तादृशप्रतीतेर्विरोध्यविषयकत्वमुपपाद्यते तदा सत्तायां द्रव्यसामानाधिकरण्याभावेऽपि तदधिकरणभिन्नत्वस्याप्यक्षततयाऽतिव्याप्तिवारणमशक्यमिति भावः । अव्याप्यवृत्तित्वसाध्यकदर्शितप्रतीतेरभावरूपविशेष्ये सत्तावृत्तित्वावगाहितया उपगमात्तत्राभावविशेष्यकसत्तावृत्तित्वविरोधिविषयकप्रत्ययं बाधकतयोपन्यस्यति—द्रव्यवृत्तित्वाभाव इति । यद्यपि द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वं गुणाद्यवच्छेदेन नतु द्रव्याद्यवच्छेदेनेति तदवच्छेदेन तत्र सत्तावृत्तित्वाभावः संभवति । एवं सत्तावृत्तित्वसत्तात्वसामानाधिकरण्यरूपम् । सामानाधिकरण्यस्याव्याप्यवृत्तित्वमते अव्याप्यवृत्तीति । तदनवच्छेदकगुणत्वाद्यवच्छेदेन द्रव्यवृत्तित्वाभावे तदभावः संभवत्येवेति न विरोधः । तथाप्युक्तयुक्त्या दर्शितप्रतीतेः सत्तावृत्तिभेदावगाहितया बाधकत्वं दुर्वारमेव । यत्तु सत्तावृत्त्यभावेऽवच्छेदकभेदेन सत्तावृत्तित्वाभावसंभवेऽपि अवच्छेदकाप्रतीतिदशायां

कृष्णंभट्टीयं ।

यति—स्वरूपसत इति । अशक्यमेवेति । हेत्वधिकरणावृत्तिसाध्यसामानाधिकरण्याभावाधिकरणं यत्, तत्तद्भिन्नत्वरूपलक्षणकरणे व्याप्यवृत्तिधर्मस्योपलक्षणत्वेनाव्याप्तेः साध्याघटितत्वं विशेषणत्वे तद्भिन्नत्वस्यैवमप्यव्याप्यवृत्त्येव भविष्यति । यदि च तत्सामानाधिकरण्यसकलतदधिकरणघटितभिन्नत्वमर्थ इति मन्यते, तदापि व्यभिचारस्थलद्रव्यवृत्तिरूपसाध्यकस्थलेऽतिव्याप्तेः । तत्रार्थस्य तदभावस्य बाधेति । यद्यपीत्यादि । नच द्रव्यवृत्तित्वाभावनिष्ठसत्तावृत्तितायां कथं गुणस्यावच्छेदकत्वं अवच्छेद्याधिकरणीभूतद्रव्यवृत्तित्वाभावेन सार्धं गुणसंबन्धाभावादिति वाच्यम् । द्रव्यवृत्तित्वाभावे गुणावच्छेद्यतायाः सत्त्वेन सत्ताद्रव्यवृत्तित्वाभावयोः संबन्धस्य सत्तावृत्तित्वलक्षणस्य तदवच्छेद्यत्वात् । संयोगस्याभावच्छेद्यतया तत्समवायादेस्तदवच्छेद्यत्वादिति । अथवा यदभावो यदवच्छेदेन तदभाववत्त्वं तद्वृत्तित्वमपि तदवच्छेदेनेत्यनुभवानुसारेण तथोक्तिः । तदनवच्छेदकेति । द्रव्यवृत्तित्वाभावे गुणत्वे सत्तावृत्तित्वं नास्तीति अनुभवादिति भावः । दुर्वारमेवेति । एवं च प्रसामान्यद्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रत्ययसत्त्वे सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीते-

त्तिरित्यादिसर्वजन(प्रसिद्ध)प्रतीतिबाधितत्वात् । बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेन एकत्र प्रतीत्या तदुभयोरेकत्र प्रसिद्धिः । अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारि-

---

जायमानपरप्रत्ययस्य सत्तावृत्तित्वमहप्रतिबन्धकतया तदुत्तरं जायमानायाः सत्ताया गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतेः सामानाधिकरण्याभावे सत्तावृत्तित्वावगाहित्वासम्भवेन गुणनिष्ठसामानाधिकरण्यावच्छेदकत्वाद्यभावावगाहित्वे सर्वत्रैव तदवगाहित्वकल्पनमुचितमिति भाववर्णनम् । तदसत् । एवं सति अवच्छेदकाविषयिण्या द्रव्यसमानाधिकरणत्वेन सत्ताया तत्सामानाधिकरण्यविषयकप्रतीतेरपि बाधकतासम्भवेन सत्ता न द्रव्यवृत्तित्वाभाववतीत्यादिपर्यन्तानुधावनस्य निर्बीजत्वापातात् । नन्वेवं संयोगादिमति संयोगादेरप्यभावो नायातु मूले न कपिसंयोग इति प्रतीतेरपि मूलनिष्ठसंयोगाद्यवच्छेदकत्वाभावावलम्बनतयोपपत्तेरित्यत आह—बाधकाभावादिति । तत्र कपिसंयोगाभावो वृक्षावृत्तिरित्यादिप्रत्ययस्यानुभवादिति भावः । संयोगाभावे वृक्षावृत्तित्वप्रत्यय इव द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वप्रत्ययेऽपि विवादसम्भवात् न सामानाधिकरण्याभावस्य न प्रत्यक्षसम्भवः तत्र तत्सत्त्वे सामासावेन तदनधिकरणस्य निष्प्रत्यूहमित्यतिव्याप्तिरित्याह—**अतीन्द्रियसाध्यकमिति।**

कृष्णभट्टीय ।

द्रव्यवृत्तित्वाभावविषयकताया असम्भवः । कथञ्चित्तादृशयाश्च पूर्वप्रतीतिविषयविरुद्धार्थविषयत्वेन भ्रमत्वम् । नहि विरुद्धविषयकयोरुभयोः प्रतीत्योः प्रमात्वसम्भवः । एवञ्च सत्ताया गुणे इत्यादिप्रतीतिः प्रमात्वे सति गुणावच्छेदद्रव्यवृत्तित्वाभावानवलम्बना तद्विरुद्धद्रव्यवृत्तित्वाभाववत्त्विशिष्टप्रकारकप्रमाविरोधिकप्रत्ययकत्वादिति प्रयोगः । यः प्रत्ययः यत्पदार्थविरुद्धपदार्थविषयकप्रमाप्रत्यक्षस्तथा तथा स प्रमात्वे सति तत्पदार्थविषयकत्वाभाववानिति व्याप्तेः । यद्वा सत्ता द्रव्यवृत्तित्वाभाववन्निष्ठप्रतीयविषयतानिरूपितविषयताशून्यद्रव्यवृत्तित्वाभाववद्विशिष्टविशिष्टप्रमाप्रकारतानिरूपितविशेष्यताश्रयत्वात् । यद्विपरीतनिष्ठप्रमाप्रकारतानिरूपितविशेष्यताश्रयत्वं तत्र तन्निष्ठप्रमाविषयतानिरूपितविषयताशून्यत्वमिति व्याप्तेरिति । अतीन्द्रियसाध्यक इत्यादि दीधितौ अतीन्द्रियसाध्यकमेकं अतीन्द्रियहेतुकं चरमत्वमिति व्यभि

व्याप्तिग्रहसङ्गाच्च । तत्र सामानाधिकरण्याभावस्य प्रत्यक्षासंभवे-नासिद्धेः । नच तदभाववद्वृत्तित्वेन तत्र तदनुमेयं तद्वद्वृत्तिभि-

---

इदं गुरुद्रव्यत्वात्पृथिवी गुरुत्वादित्यादावित्यर्थः । अथवा स्तम्भादौ पिशाचत्वाभावस्यैव स्तम्भत्वादौ पिशाचत्वसामानाधिकरण्याभावस्य महति वायौ रूपाभावस्यैव महत्त्वादौ रूपसामानाधिकरण्याभावस्यापि प्रत्यक्षत्वादुभयत्रातीन्द्रियत्वोपादानम् । तत्रेति । गुरुत्वादिसाध्यकस्थले साध्यसामानाधिकरण्याभावस्यातीन्द्रियप्रतियोगिकतया अतीन्द्रियत्वेन अतीन्द्रियहेतुकस्थले च धर्मिण एव तथात्वात् । हेतौ साध्यसामानाधिकरण्याभावस्य प्रत्यक्षासंभवेन तत्र तदसिद्धेरित्यर्थः । तदभाववद्वृत्तित्वेन गुरुत्वाभाववद्वृत्तित्वेन । तत्र द्रव्यत्वादौ । तत् गुरुत्वादिमद्वृत्तित्वाभावपरम् । अनुमेयमिति । तद्विरुद्धदृष्टान्तेनेत्यादिः । तद्वदिति ।

कृष्णभट्टीय ।

चारिद्वय प्रतीयत इत्याशयेनाह—इदं गुर्विति । साध्यविशिष्टवृत्तित्वाभावनिवेशमभिमेत्य । ननु दीधितौ गुरुत्वविशिष्टवृत्तित्वाभावस्यैव प्रत्यक्षासंभव उक्तः । तस्य क्षितिपाथोन्यतरवृत्तित्वाभावात्मकत्वात् । ननु तदुपलक्षितवृत्तित्वाभावरूपस्य गुरुत्वसामानाधिकरण्याभावस्य तेजआद्यवच्छेदेन द्रव्यत्वादौ पृथिवीजलान्यतरवृत्तित्वाभावस्य प्रत्यक्षतया गुरुवृत्तित्वाभावस्यापि तदात्मकत्वेन प्रत्यक्षत्वात् । नच समनियताभावभेदमते दीधितिसंगतिः । तथापि प्रत्यक्षमूलेन जलपृथिव्यन्यतरवृत्तित्वाभावरूपलिङ्गेन तदनुमानसंभवात् । तथाच गुरुत्वसाध्यके व्याप्तिग्रहसंभव एवमागोपाधिरुपाधित्वभङ्गश्च । चकारादर्शनेन व्यभिचारिद्वयलाभ वक्ष्यमाणास्वरसेनेति मनस्त्ववदणुत्वादित्येकव्यभिचारिपरतामाह—अथवेति । इहात्मत्वे धर्मेणोक्तस्थले साध्यसामानाधिकरण्याभावप्रत्यक्षलाभ । तद्विरुद्धम् । आत्मत्वोष्मस्पर्शादि । नन्वणुत्व मनोवृत्तित्वाभाववत् मनस्त्वाभाववद्वृत्तित्वादात्मवदित्यादौ साध्ये व्यभिचारनिरूपकाधिकरणावच्छेदकस्य स्य

न्यायरत्न ।

दीधितावतीन्द्रियसाधकमेकमपरं चातीन्द्रियहेतुकमिति व्यभिचारिद्वय प्रतीयत इत्याशयेनाह—इदं गुर्विति । ननु गुरुत्वविशिष्टवृत्तित्वाभावस्यातीन्द्रियतावद्वृत्तित्वप्रतियोगिकतयाऽतीन्द्रियत्वेऽपि गुरुत्वोपलक्षितवृत्तित्वाभावस्य जलपृथिव्यन्यतरवृत्तित्वाभावात्मनस्तु न तथात्वलक्षणे साध्योपलक्षिताधिकरणवृत्तित्वा-

पणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः । तेन संबन्धेनाधिकरणे काले तेन संबन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः ॥

इति श्रीमद्रघुनाथभट्टाचार्यशिरोमणिविरचितायां शिरोमण्याख्यतत्त्वचिन्तामणिव्याख्यायां दीधित्यपराख्यायां सार्वभौमपरिष्कारः समाप्तः ॥

---

बन्धेनेत्यर्थः । अभावादेरिहेति प्रत्ययनियामको यो दैशिकविशेषणताविशेषः तत्र तादृशसंबन्धवैलक्षण्यस्य प्रामाणिकतालाभार्थं विलक्षणप्रतीतिनियामकत्वाभिधानम् । नचेदानीमिति प्रतीतौ संबन्धवैलक्षण्याभावेऽपि कालत्वेनाधिकरणावगाहादिहेति प्रत्ययात्तस्य वैलक्षण्यमुपपद्यत इति किं संबन्धवैलक्षण्येनेति वाच्यम् । संबन्धविशेषानुयोगित्वादन्यस्य कालत्वस्य दुर्वचत्वात् । इदानीं कालत्वाभाव इत्यादिप्रतीत्या कालत्वाद्यभाववृत्तेः प्रामाणिकत्वे काले कालत्वं नास्तीति प्रतीत्यनुदयात्तादृशाकारकप्रतीतौ कालिकसंबन्धव्याप्यरूपावच्छिन्नाया एव विशेषणतायाः नियामकत्वस्यावश्यकत्वाद्दैशिककालिकसाधारणसंबन्धतावच्छेदकस्याप्रामाणिकतया कालिकसंबन्धे संबन्धतावच्छेदकीभूतस्य वैलक्षण्यस्य सिद्धेर्निष्प्रत्यूहत्वाच्च । सद्धेताविति । कालत्वादिसाध्यकपटादिहेतावित्यर्थः । कालेति । कालावच्छेदेनेत्यर्थः । अप्रसिद्धेरिति । वृत्तिमतः कालावच्छेदेन

कूर्णमहीयं ।

व्याप्तिरिति भावः । अभावादेरिति । गगनादाविह कर्मत्वं नास्तीति प्रत्ययेऽपि इदानीं कर्मत्वं नास्तीति प्रत्ययाभावात्तत्र तादृशप्रत्ययवारणाय वैलक्षण्याभिधानम् । अथ विशेषणतात्वेन संबन्धतासंभवे विशेषणपदोपादानाद्यदि कालिकविशेषणतात्वेन संबन्धता तदा महाकालानुयोगिकविशेषणतात्वेन संबन्धता स्यात् । विशेषणतायां विशेष इत्यर्थो वा तथा च तेन संबन्धेन घटादिसाध्यकेऽव्याप्तिरिति मतं निराचिकीर्षुर्विशेषणपदस्य विशेषणतात्वाप्रसिद्धिसूचकतया विशेषरूपेण संबन्धत्वं निराकरोति । दैशिकेति । विशेषणतात्वं चेदनुगतं स्यात्तदा स्यादपि तथासंबन्धः तदेतस्याप्रामाणिकमित्यर्थः । व्यभिचारिणि आत्मत्वाभाववान् घटत्वात्, एतदात्मत्वाभाववान् आत्मनः शब्दवान् गगनमहाकालान्यतरत्वादित्यादौ । धूमवान् वह्नेरित्यादौ तादात्म्येन हेतोरपि कालिकाभिमतत्वेन न संबन्धत्वातद्व्यतिरिक्तेति । कालावच्छेदेने-

न्धेन व्याप्तेरनभ्युपगमसंभवेन वृत्त्यादेरपि निवेशसंभव इत्यभिप्रायेणैवातिव्याप्त्यनुद्भावनात् । एतेन हेत्वधिकरणखण्डकालविशेषावच्छेदेन कालिकसंबन्धेन तद्वृत्तौ वह्निविषयकज्ञान एव साध्यसामानाधिकरण्यप्रसिद्धिः संभवति । नन्वेवमपि कालत्वान्सर्वस्मादित्यादौ खण्डकालस्य हेत्वनधिकरणतया हेत्वधिकरणावच्छिन्नसाध्यसामानाधिकरण्याप्रसिद्धिर्दुर्वारैवेति वाच्यम् । हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणत्वपर्यन्तानिवेशेन वैशिष्ट्यस्य व्यासज्यवृत्तिधर्मानवच्छिन्नस्य यत्र हेतुत्वं तत्र तादृशपर्याप्तैवैतन्मते स्वावच्छिन्ननिरूपिताधिकरणतारूपपरंपरासंबन्धेन हेतुत्वस्यानुमततया उक्तस्थले सर्वत्वस्यैव तादृशसंबन्धेन हेतुतया तादृशसंबन्धेनावृत्तौ कालिकसंबन्धेन कालवृत्तौ गगनत्वादावेव तादृशसंबन्धेन साध्यवद्वृत्तित्वाभावस्य हेत्वधिकरणकालावच्छेदेन प्रसिद्धिरिति परास्तम् । तादृशकाले उक्तज्ञानस्य विषयतासंबन्धेन सत्त्वेऽपि तादृशसंबन्धस्य वृत्तिनियामकत्वानभ्युपगमेन तज्ज्ञानस्य तत्कालीनत्वविरहेण च तस्य तज्ज्ञानानधिकरणत्वात् । तज्ज्ञाने अभाववृत्तौ तत्कालस्यानधिकर-

कृष्णंभट्टीयं ।

वृत्ति । तादात्म्यसंबन्धेन यस्य हेतुताधर्मस्य वृत्तिनियामकसंबन्धेन तथाऽसति भानमुपगम्य तत्तद्धर्मिकानुमितिसामग्र्या व्यापकत्वमुपगम्य सद्धेतुनाऽतत्साध्यकानुमितिस्वीकारात् । तज्ज्ञानस्येति । विभिन्नकालीनयोराधाराधेयभाव इति भावः । तत्र तादात्म्यस्यावच्छेदकतानियामकत्वेऽपि कालत्वप्रकारकप्रमाविषयत्वसाध्यके तादात्म्यकालिकान्यतरसंबन्धेन कालहेतुकेऽव्याप्तिर्दुर्वारैव । संयोगादिसंबन्धेन वृत्तिमन्मात्रस्य भावाभावोभयस्य कालिकसंबन्धेन महाकालस्य तादात्म्यसंबन्धेन महाकाले सत्त्वेन साध्यवन्निरूपिततादात्म्यान्यतरसंबन्धावच्छिन्नवृत्तित्वाभावस्य स्वाधिकरणदेशावच्छेदेनाप्रसिद्धेः । गगनादौ च तत्प्रसिद्धावपि हेत्वधिकरणानवच्छिन्नत्वात् । तस्मात्तत्राव्याप्तिप्रतिपादकोऽयं ग्रन्थ उपलक्षणपरतया व्याख्येयः । एवं चाधेयतेत्यादिपूर्वग्रन्थोऽप्यकिंचित्कर एवेति । अत्र चान्यतरत्वेन संबन्धत्वोपगमप्रसंगो चोद्यः । वस्तुतस्तु ज्ञानं सविषयकं घटादित्यादौ विषयतायाः ग्रन्थकारमते वृत्तिनियामकतया तत्संबन्धेन हेतौ पदार्थमात्रस्य तत्संबन्धेनेश्वरज्ञानवृत्तितया निर्विषयकावच्छेदेनैव साध्यसामानाधिकरण्याभावो बोध्यः । स न हेत्वधिकरणावच्छिन्नः तदवच्छेदेन क्वापि पदार्थे स्व

१ अवच्छेदकत्वात्

णत्वात् । महाकालानुयोगिकविशेषणताविशेषेण घटादिहेतुकस्थ-लाभिप्रायकोऽयं ग्रन्थः । तादृशसम्बन्धेन हेतुतायाः खण्डकाले-ऽभावान्नोक्तदिशा प्रसिद्धिरित्यपि केचित् । अत्र स्वनिष्ठहेतुतावच्छे-दकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानवच्छेदकता तादृशसम्ब-न्धावच्छिन्नस्वाधिकरणतावत्सामान्यकत्वं विवक्षणीयमिति नोक्ता-व्याप्त्यवकाशः । स्वावयवपरमाण्वाद्यवच्छेदेन घटादौ वर्तमाने कालत्वादिसामानाधिकरण्याभावे तदधिकरणकालसामान्यस्यानव-च्छेदकतया तत्र लक्षणसमन्वयसम्भवात् । सत्तावान्जातेरित्यादौ कालिकसम्बन्धेन जातिसम्बन्धिध्वंसाद्यवच्छेदेन साध्यवद्वृत्तित्वा-भावो जातौ प्रसिद्ध इति ध्येयम् । केवलान्वयिसाध्यके ज्ञेयत्वादौ सर्वाधिकरणावच्छेदेनैव हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृ-त्तित्वसत्त्वात् स्वनि(रूपि)ष्ठतदभावाप्रसिद्ध्याऽव्याप्तिर्न क्षतिमावहति ।

कृष्णभट्टीय ।

न प्रसिध्यतीति अव्याप्तिर्बोध्या । महेति । विशेषणरूपेण सम्बन्धतास्वीकारे स्वरसः । अधेत्यादय परिष्कारस्य पन्थानो द्रष्टव्या इत्यन्वयः । स्वनि-ष्ठेति । तथाच कालिकसम्बन्धेन घटत्वे सत्त्वात्तत्र तन्निष्ठसाध्यवद्वृत्ति-त्वाभावानवच्छेदकत्वान्न व्याप्तेरित्यादिरीत्या व्याप्ते स्वनिष्ठपदनिवेशः । साध्यवद्वृत्तितावच्छेदकहेतुतावच्छेदकसम्बन्धानुपादाने चिन्त्यमेतत् । गग-नभिन्न घटत्वादित्यादौ स्वनिष्ठस्य साध्यसम्बन्धस्य सामान्याभावस्य प्रसिद्धहेतु तावच्छेदकसम्बन्धनिवेशः । स्वनिष्ठत्वानुपादाने इद चिन्त्यम् । अधिकरण-ताया तादृशसम्बन्धावच्छिन्नत्वप्रयोजनं स्फुटम् । स्वनिष्ठस्य तादृशाधिकरण ताया निर्वाहेन तेन धूमरूपयो साध्यवद्वृत्तित्वाभावसत्त्वेऽपि नाव्याप्ति । व्यभिचारिवारणाय सामान्यपदम् । अन्यथा तत्र कालोपाधितत्वदेऽव्याह— परमाण्विति । अवच्छेदकतानियामिका दिक्कृतविशेषणता । मूर्तमात्र न दिगुपाधि किंतु अन्यगुणमिन्नुपाधिरित्याह—आदीति । आदिना महदि-पर्वपरिग्रह । सम्बन्ध पूर्वोक्त एव । अत्र ज्ञान तद्विषयक इदादित्यादौ विष यतासम्बन्धेन हेतौ संयोगादिना स्वाधिकरणभूतलाद्यवच्छेदेन सत्तावान् सम्बन्धमात्रावसत्त्वात् जातेरित्यादौ कालिकसम्बन्धेन जातिमद्विध्वंसा द्यवच्छेदेन अनुयोगितावीशेषसम्बन्धेन भेदावच्छेदेनवा, सत्ताभावाभावान्यतर पात् स्पन्दादित्यादौ च क्रियावच्छेदेन वृत्तित्वाभावो बोध्य । सर्वेषा मपि देशविधयावच्छेदकत्वात् एव बहुत्वभिन्नो गोत्वादित्यादौ समवायेन

व्यापत्व ।

स्वनिष्ठाद्येऽपरम् । अथेति । परिष्कारस्य पन्थानो द्रष्टव्या इत्यनेनान्वितम् । स्वनिष्ठेति । पूर्वोक्तरीत्या साध्यवद्वृत्तित्वाभावाऽव्याप्ते स्वनिष्ठनिवेशः ।

मूलकृतैव तत्राव्याप्तेर्वक्ष्यमाणत्वात् । यदि चैवमात्मभिन्नं ज्ञानवदन्यत्वादित्यादौ हेतोरात्मान्यसकलवस्त्ववच्छेदेनैव दैशिकविशेषणतया साध्यवद्वृत्तित्वसत्त्वात् । आत्मनश्च केनापि सम्बन्धेन हेतुमत्त्वाभावात् । तदवच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववद्वृत्त्य-समयाद्धेतुनिष्ठतादृशाभावाप्रसिद्ध्याऽव्याप्तिरिति विभाव्यते । तदा हेतुतावच्छेदकसम्बन्धेन यत्स्याधिकरणं तदवच्छेदेन स्वासि-

कृष्णभट्टीय ।

हेतापभ्यूहम् । केवलसाध्यवद्वृत्तित्वेन रहित अन्वय साध्यवद्वृत्तित्व मस्येति स्पष्टस्था साध्यसामानाधिकरण्याभावाप्रसिद्ध्याऽव्याप्तेर्मूलकाराभिमतत्वात् । यदि चेति । वस्तुतस्तु अव्याप्यत्वादे सम्बन्धसामान्ये न व्याप्ति रतो यदि चेति । हेतुत्वेति । आत्मभिन्नं ज्ञानवदन्यत्वादित्यादौ विषयतादिसम्बन्धेन हेतौ च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे मन कृपाल्पसमवेतत्वाद्यभावो बोध्य । कालत्वयापानिति । अथैतद्दोषवारणाय सकलस्वरूपंसम्बन्धावच्छिन्नाधिकरणावच्छेदेन हेतुवृत्तिकाभावप्रतियोगितानवच्छेदक साध्यवद्वृत्तित्वरूप तद्धर्मवत्त्व व्याप्तिरिति हेतुतावच्छेदकसम्बन्धाविशेषितसाध्य-

न्यायरत्न ।

गगनभिन्नं घटत्वादित्यादौ सनिष्ठसाध्यवद्वृत्तित्वसामान्याभावाप्रसिद्धेर्हेतुतावच्छेदकसम्बन्धावच्छिन्नतादृशवृत्तित्वनिवेश । समवायेन धूमाधिकरणत्वाभाववत्स्व स्वाधिकरणतात्वसामान्यान्तर्गतस्य स्वनिष्ठतादृशाभावानवच्छेदकत्वविरहादव्याभिचारणाय स्वाधिकरणतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेश । स्वाधिकरणद्रव्यस्य तन्निष्ठतादृशवृत्तित्वाभावानवच्छेदकत्वाऽव्यत्वसाध्यके तत्रातिव्याप्तिवारणाय सामान्यपदम् । हेतुतावच्छेदकसम्बन्धेन यत्स्याधिकरणमिति । अत्र साध्यवद्वृत्तित्वे हेतुतावच्छेदकसम्बन्धनिवेशो व्यर्थ । न च संयोगेन धूमवति पर्वते तत्र कालेऽयोगोलकीयवह्नेः स्वाधिकरणायोगोलकावच्छेदेनैव कालिकेन वृत्ति काले वृत्ती देशतावच्छेदकत्वाभावाच्चायोगोलकावच्छेदेन धूमवद्वृत्तित्वसामान्याभावस्य सत्त्वादतिव्याप्तेर्हेतुतावच्छेदकसम्बन्धनिवेश इति वाच्यम् । सामानाधिकरण्यनिरूपकत्वेन तदवच्छेदकमन्यत्तदभाववच्छेदकमिति प्रत्यक्षसिद्धतया तथा च सामानाधिकरण्यानिरूपकस्यायोगोलकस्य तदभावावच्छेदकत्वमव्याहतम् । अन्यथा हेतुतावच्छेदकसम्बन्धनिवेशोऽपि संयोगेन धूमसाध्यकेन वह्नेर्हेतुत्वेऽतिप्रसङ्गस्य दुर्वारत्वापत्ते । परन्तु हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणावच्छेद्यहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभाववद्भिन्नत्वरूपलक्षणघटकपदार्थपरिच्छेदेनैव कतिपयपदार्थविशेषणविशेष्यभावव्यत्ययेनैतद् लक्षण कृतमिति ज्ञापनार्थम् उद्भावनमिति ध्येयम् । अत्र हेतुभेदेन व्याप्तिभेदादुद्धरत्वाच्च साध्यवद्वृत्तित्वाभावघटितलक्षणान्तरमाह—हेतुतेति । महानसायो-

न्वर्त्तते यो अभावस्तत्प्रतियोगितानवच्छेदकतादृशसम्बन्धावच्छिन्न-
साध्यवद्वृत्तित्वमेव व्याप्तिरित्येव विवक्षणीयम् । कालत्वाद्घटा-
दित्यादौ घटादौ कालावच्छेदेन वर्त्तमानः कपालसमवेतत्वाद्यभाव एव
प्रसिद्धः तत्प्रतियोगितानवच्छेदकं कालिकसम्बन्धावच्छिन्नं कालवृ-

कृष्णभट्टीय ।

त्तित्वघटितलक्षणमुररीक्रियते । महाचार्यैरुद्भावितसाध्यवद्वृत्तित्वघटितं, स्वाधिकरणावच्छेदेन स्वस्मिन्वर्त्तते योऽभाव इत्याद्येतत् तन्नानुगतहेतुतावच्छेदकरूपेण हेतुनिवेशाद्यावश्यकत्वसम्भवात् स्वत्वेन तन्निवेशस्तन्मते न युज्यते । किञ्च साध्यवद्वृत्तित्वे हेतुतावच्छेदकसम्बन्धनिवेशो व्यर्थं महानसीयधूमे वह्निमत्स्वप्रत्यभाववत्वेऽपि तत्र कालिकादिसम्बन्धेन वह्निमत्सम्बन्धतया तत्सामान्याभावासत्त्वेनाव्याप्त्यसम्भवात् । व्यभिचारिणि व्यभिचारनिरूपकाधिकरणे साध्याभावेन तदवच्छेदेन साध्यसामानाधिकरण्याभाववत्त्वेनातिव्याप्त्यभावाच्च । अथ संयोगेन धूमवति पर्वतरूपकाले अयोगोलकीयवह्नेः स्वाधिकरणीभूतायोगोलकावच्छेदेनैव कालिकसम्बन्धेन वृत्ते काले वृत्तौ देशत्वावच्छेदकत्वात् तथा चायोगोलकावच्छेदेन धूमवत्सम्बन्धावसामान्याभावो न वह्नौ वर्त्तते इति अतिव्याप्तेर्वृत्तौ हेतुतावच्छेदकसम्बन्धनिवेश इति चेत् । सामानाधिकरण्यनिरूपकमेव तदवच्छेदक अन्यत्तु अभावावच्छेदकमिति लक्षणकृत्सम्मततया अत्र पिण्डस्य तदभावावच्छेदकत्वात् । अन्यथा हेतुतावच्छेदकसम्बन्धोपादानेऽपि तत्रैव कालिकेन हेतौ वह्नौ तदवच्छेदेन धूमवन्निरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वाभावासत्त्वापत्ते प्रतियोग्यनधिकरणधूमवच्छेदेन कालिकसम्बन्धावच्छिन्नायोगोलकीयवह्न्यभाववद्धूमवन्निरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वानिरूपकत्वेन तदभावे धूमवन्निष्ठत्वावच्छेदकत्वाविरहाच्च । न च तर्कालङ्कारमते सामानाधिकरण्यानिरूपकदेशाद्यवच्छेदकताविलक्षणावच्छेदकतानिवेशः । महाचार्याणां तु तदनिवेशाद्धेतुतावच्छेदकसम्बन्धनिवेश इत्युभयमन्यसामञ्जस्यमिति वाच्यम् । द्रव्यं गुणान्यत्वविशिष्टसत्त्वादित्यादौ सत्तानिष्ठद्रव्यवृत्तित्वावच्छेदकविशिष्टद्रव्यवृत्तित्वाभावानवच्छेदकतया अतिव्याप्ते सर्वमते विलक्षणावच्छेदकतानिवेशावश्यकत्वात् । काले वृत्तौ देशत्वावच्छेदकत्वात् सामानाधिकरण्यनिरूपकदेशाविभयानवच्छेदकत्वसाध्यत्वजातीयं वाच्य । अन्यथा आत्मत्वे कालिकसम्बन्धावच्छिन्नात्मत्वसामानाधिकरण्ये आत्मन एवावच्छेदकत्वमन्यत्र कालिकसम्बन्धावच्छिन्नात्मत्वाभावे जन्यस्यैव च देशत्वावच्छेदकत्व घटादे तदभावावच्छेदकत्वत्वात्मन इति सिद्धान्तभङ्गप्रसङ्गात् । प्रतियोग्यनवच्छेदकस्यैवाभावावच्छेदकत्वमिति सजातीयावच्छेदकताविषयकनियमस्य भङ्गात् । तस्मात् साध्यवद्वृत्तित्वे हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणं निष्फलमेवेति चेन्मैवम् ।

त्तित्वादिकमिति लक्षणसमन्वयः। हेतुतावच्छेदकसंबन्धेन यद्वृत्तिमत् तन्निष्ठतत्संबन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानवच्छेदकतत्संबन्धावच्छिन्नतद्वस्तुप्रकृतहेतूभयाधिकरणवावत्सामान्यकत्वं वा वक्तव्यम्। आत्मभिन्नं ज्ञानवदन्यत्वादित्यादौ आत्मत्वावच्छेदेन घटत्वाभावादिनिष्ठस्यात्मान्यनिष्ठत्वाभावस्यानवच्छेदकत्वं घटत्वाभावज्ञानवदन्यत्वोभयाधिकरणतावत्सामान्यमिति लक्षणसमन्वयः। उभयाधिकरणत्वनिवेशाद्वह्निमान्धूमादित्यादौ धूमादिसंयोगिनः कपालादेर्घटनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकत्वेऽपि न दोषः। कपालादेः संयोगेन तद्घटानधिकरणतयोक्तोभयाधिकरणतावत्सामान्यानन्तर्गत-

कृष्णभट्टीय।

तत्र तद्विशेषणनिवेशिना हेतुवृत्तित्व व्यर्थं। पर्वतरूपस्यैव साध्यवत्संबन्धसामान्याभावाक्षमात्। नापि पर्वतीयधूमे महानसावच्छेदेन धूमान्तरसंयुक्तस्यानवयवावच्छेदेन धूमेचा साध्यवत्संबन्धसामान्याभाव महानसस्वावयवयोरपि वह्निमत्त्वादिति। हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतात्पर्युदासेनगतानयोर्व्याप्यव्यापकभावमात्रं पृथगवच्छेदोपाधित्व चेति पक्षात्सन्निवेशे वैयर्थ्यमिति पर्यालोच्य हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतोपादानं कृतम्। हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतैव संबन्धान्तरावच्छिन्नाधेयताऽपि भिन्न इत्युपगमेऽपि हेतुवृत्तित्वनिवेशिना साध्यवद्वृत्तित्वे अनुपात्तमपि हेतुतावच्छेदकसंबन्धावच्छिन्नत्वमस्तीति सूचनायैव तदुपादानम्। तथासत्येव धूमान्तरेणाद्रिकमेणाव्यये सार्थकत्वात् नच हेतुवृत्तित्वोपादानेऽपि समान्याप्तिर्न वार्यत इति वाच्यम्। हेतुतावच्छेदकावच्छिन्नवृत्तित्वस्य यद्धर्मत्वात्। अत्रातिप्रसक्तधर्मव्याप्यानुयोगितावच्छेदकत्वे बाधकाभावात् तदर्थकहेतुवृत्तित्वनिवेशोऽव्यर्थाहेतुर्वारित्वमालोच्य स्वय स्ववृत्तित्वनिवेश कृत। अथ हेतुवृत्तित्व स्वनिष्ठत्व ओपादीयता यथा सन्निवेशेऽवैयर्थ्यात् हेतुतावच्छेदकसंबन्धावच्छिन्नत्वैयर्थ्यं तु न ह्येतत इति चेत्, हेत्वधिकरणावच्छिन्नसाध्यवन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाभावघटितस्वलक्षणघटकपदार्थपरिहारेण कतिपयपदार्थविशेष्यविशेषणभावव्यत्यासेनेदं लक्षण कृतमिति सूचनाय तदुपादानात्। अत्र हेतुभेदेन व्याप्तिभेदात् तद्दृष्टत्वाच साध्यवद्वृत्तित्वाभावघटित लक्षणान्तरमाह—हेतुतेति। वह्निमान् धूमादित्यादौ वस्तुपदेन शैवालादिकं न ग्राह्यं। तथासति तद्वस्तु प्रकृतहेतूभयाधिकरणाप्रसिद्धिः स्यात्। किंतु पर्वतादिनिष्ठत्वमादिकमेव तत्र स्वावयवावच्छेदेन साध्यवद्वृत्तित्वाभावस्याप्रसक्त्यलक्षणसमन्वय। कालिकसंबन्धेन हेतौ हेतुतावच्छेदकसंबन्धेन वृत्तिमति घटादौ स्वावयवपरमाण्वाद्यवच्छेदेन वाच्यम्। ह्रेयत्वादित्यादौ तथाविधघटत्वप्रकारकप्रमाविषयत्वादरुक्तरीत्या

त्वात् । अथवा हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छिन्नं

कृष्णभट्टीय ।

घटाद्यवच्छेदेन विषयतासम्बन्धेन हेतौ तादृशहेतुनिश्चयादौ स्वाधिकरणभूतलाद्यवच्छेदेन च साध्यवद्वृत्तित्वाभाव प्रसिद्ध । धूमवान् वह्नेरित्यादौ महानससाधारणदीर्घदण्डरूपवद्वस्तुप्रकृतहेतूभयाधिकरणमहानसमादाय साध्यवद्वृत्तित्वाभावानवच्छेदकत्वादृतिव्याप्ते सामान्यपदम् । उभयाधिकरणत्वनिवेशादित्यादिना स्वयमेव तद्वस्तुनिवेश सार्थकयिष्यति । तेन व्याधिकरणधूमान्तरसंयुक्तस्वावयवावच्छेदेन साध्यवद्वृत्तित्वाभावसत्वाद्धूमेऽपि नाव्याप्तिः । प्रकृतहेत्वनिवेशे हेतौ धूमरूपतद्वस्त्वधिकरणकरणत्वेपि मेयत्वान्वयिति घटत्वप्रकारकप्रमाविषयत्वरूपतदधिकरणकत्वासम्भवेनाव्याप्तिरत तन्निवेश । आत्मभिन्न ज्ञानवद्न्यत्वादित्यादौ घटत्वाभावे मासानवच्छेदेन साध्यवद्वृत्तित्वाभाववत्वादव्याप्तिवारणमपि तत्प्रयोजनं । प्रत्व विशिष्टसत्तावानित्यादौ विशिष्टसत्तानतिरिक्तत्वामते सत्ताविशिष्टसाध्यवद्वृत्तित्वाभावानवच्छेदकत्वविरहादव्याप्ते व्याप्तेर्व्यधिकरणधर्मानुरोधेन च प्रकृतत्वनिवेशः । हेतुतावच्छेदकसम्बन्धेन तद्वस्त्वधिकरणतानिवेशात्समवायकालसमवेतपदे साध्यवद्वृत्तित्वाभावत्वेन कपालस्य तदवच्छेदकत्वेपि न क्षति । नच हेतुतावच्छेदकसम्बन्धेन तद्वस्त्वधिकरणतानिवेशे वृत्तिमत्वमात्रनिवेशेपि निर्वाहसम्भवाद्वृत्तौ हेतुतावच्छेदकसम्बन्धेनेति व्यर्थमिति वाच्यम् । हेतुतावच्छेदकसम्बन्धेन यद्वस्तु प्रकृतहेतूभयाधिकरणप्रसिद्धि तद्वस्तुन पक्षोपादेयतया वृत्तिमत्वानिवेशेऽप्यदोषात् । तथाच यत्किञ्चित्साध्यवद्वृत्तित्वाभावानवच्छेदकस्य हेतुतावच्छेदकसम्बन्धावच्छिन्नतन्निष्ठाधेयतानिरूपकत्वसहितयद्धर्मावच्छिन्नाधिकरणताव्यापक तद्धर्मावच्छिन्ननिवेशे हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्ति मयत् तदेव सच्छदेनोपादेयमित्येतल्लाभार्थं तथोक्तिरिति । अथ धूमादिसंयोगेन कपालादे यत्किञ्चिद्वह्निमत्संयुक्तत्वाभावानवच्छेदकत्वेऽपि धूमाधिकरणस्य वह्न्यादिरूपयत्किञ्चिद्वस्तुनिष्ठवह्निमत्संयुक्तत्वाभावानवच्छेदकतया लक्षणसमन्वयसम्भवाद्धेतुतावच्छेदकसम्बन्धावच्छिन्नवद्वस्तुमात्र व्यर्थं । नच धूमवान् वह्नेरित्यादौ धूमवद्धूमयाधिकरणस्य धूमनिष्ठसाध्यसामानाधिकरण्याभावानवच्छेदकत्वेपि सामान्यान्तर्गततयोक्तस्य कालिकसम्बन्धेन धूमाधिकरणतया तादृशावच्छेदकत्वादतिव्याप्तिविरहेऽपि जातिमान् भावत्वादित्यादौ सत्तावत्त्वप्रकारकप्रमाविषयत्वनिष्ठसाध्यसामानाधिकरण्याभावानवच्छेदकहेत्वधिकरणकत्वादतिव्याप्तिरिति यत्तद्वस्तु विपक्षगोप्य । एवच तद्वस्त्वन्तर्गततयटमादायाव्याप्तेर्वारणाय तद्विलक्षणमावश्यकमिति वाच्यम् । तथापि दैशिकस्यापि घटादृष्टान्तर्गततया तद्विशिष्टसाध्यवद्वृत्तित्वाभावानवच्छेदकत्वात्कपालोभयाधिकरणाप्रसिद्धे । तत्सामान्यवृत्तित्वाभावे नाव्याप्तिरिति चेन्न । हेतुसमानाधिकरणस्य यद्वस्तुविशेषणत्वात् ।

स्ववृत्तिकान्यहेतुतावच्छेदकसंबन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावविवक्षणान्न कश्चिद्दोषः । सर्वत्र सद्धेतावन्ततः प्रसिद्धेः साध्यसामानाधिकरण्याभाव एव स्ववृत्तिकान्यत्वसत्त्वेन लक्षणसमन्वयात् । वह्न्यादिनिष्ठधूमादिसामानाधिकरण्याभावेऽयोगोलकादिरिव तद्वृत्तित्वस्यापि अवच्छेदकसंबन्धावच्छिन्नवृत्त्यनवच्छिन्नहेतुतावच्छेदकसंबन्धावच्छिन्नसाध्यसामानाधिकरण्याभाववत्त्वं वा विवक्षणीयम् । इत्यादयः परिष्कारस्य पन्थानो द्रष्टव्याः ॥ इति सार्वभौमपरिष्कारः संपूर्णः ॥

इति श्रीगदाधरभट्टाचार्यविरचितव्याप्तिपञ्चकं संपूर्णम् ।

---

कृष्णंभट्टी ।

वस्तुतस्तु यद्वृत्तीहे। पूर्वपदार्थस्य विधेयतया यपदस्य प्रकृतहेतुसमानाधिकरणसामान्यं तद्वस्तुवृत्ति साध्यसामानाधिकरण्याभावानवच्छेदकमित्येवाभिमतं । यत्र च धूमवत्काले तृणघटौ तत्र तृणधूमोभयवृत्तित्वघटितनिष्ठसाध्यवद्वृत्तित्वाभावानवच्छेदकत्वेऽपि न क्षतिः । प्रत्येकमेकैकवस्तुघटितोद्देशे तद्वस्तुघटितविधेयाभावात् । एवंच व्यभिचारनिरूपकाधिकरणमात्रवृत्तितृणादेर्यत्पदार्थत्वपर्यवसानादप्रसिद्धातिव्याप्तिविरहेऽपि तद्रूपभिन्नं गुणत्वादित्यादौ अतिव्याप्तितः सामान्यपदं । एवं च हेतुमद्वृत्तित्वं व्यर्थमेव । न चास्मभिर्मते ज्ञानवदन्यत्वादित्यादौ ज्ञानत्वसामान्यवन्मेयत्व यत्पदार्थान्तर्गतत्वस्य तन्निष्ठसाध्यसामानाधिकरण्याभावाप्रसिद्धेरव्याप्तिरिति वाच्यम् । उद्देश्यघटकवस्तुनोऽपि ज्ञेयत्वेऽपि साध्यवद्वृत्तित्वाभाववत्त्वनिवेश इति दिक् । हेत्वधिकरणावच्छिन्नतदधिकरणत्वमदर्शयत्प्रवेश एव दीधितिकारोक्तदोषः प्रसज्यते । ननु तदवच्छिन्नस्ववृत्तिकान्यत्वनिवेश इत्याशयेनाह—अथवेति । हेत्वधिकरणावच्छिन्नरूपनिष्ठसाध्यसामानाधिकरण्यमादाय व्याप्तेः स्ववृत्तिकत्वनिवेशः । अत्र हेतुतावच्छेदकनिवेशः । हेत्वधिकरणावच्छिन्नस्ववृत्तिकान्यत्वस्थाने स्वनिष्ठहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्त्यनवच्छिन्नत्वनिवेशायोपक्रमते । वह्न्यधीति । वैशाल्यादिनिष्ठसाध्यवद्वृत्तित्वाभावस्य तन्निष्ठवृत्त्यवच्छिन्नत्वादव्याप्तितः स्व-

न्यायरत्नं ।

गोलकसाधारणदीर्घदण्डादिरूपवस्तुहेतुमयाधिकरणसहानवस्थादेः साध्यवद्वृत्तित्वाभावानवच्छेदकत्वाद्धूमवान्वह्नेरित्यादावतिव्याप्तेः सामान्यपदम् । केवलान्वयिन्यान्यभिन्नं ज्ञानवदन्यत्वादित्यादौ न घटत्वप्रकारकप्रमाविषयत्वघटत्वाभावादिरूपतदधिकरणत्वस्य हेतावभावात्प्रकृतहेतुनिवेशः । तद्वस्तुत्वावच्छिन्नोभयाधिकरणकधर्मवत्त्वनिवेशाच्चाप्रसिद्धेरव्याप्तिः । उभयाधिकरणत्वनिवेशप्रयोजनं

कृष्णंभट्टी ।

ताशालिसाध्यवद्वृत्तित्वाभावप्रसिद्ध्या तदधिकरणभिन्नत्वस्य हेतौ सत्त्वात् । नन्वेवं संयोगेन द्रव्यसाध्यके तेनैव संबन्धेन प्रमेयहेतुकस्थले हेतुतावच्छेदकसंबन्धस्य तत्संबन्धावच्छिन्नवृत्तित्वाभावावच्छेदकत्वासंभवात् । तदितरस्य सकलस्यापि संबन्धस्य हेतुप्रतियोगितया तत्संबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यताशालिसाध्यवद्वृत्तित्वाभावाप्रसिद्ध्या अव्याप्तिरिति चेन्न । हेतुतावच्छेदकसंबन्धेन संबन्धित्वस्यावच्छेदकतानियामकसंबन्धघटकीभूतहेतुप्रतियोगितेत्यत्र हेतावेव निवेश्यतया हेतुतावच्छेदकसंबन्धातिरिक्तहेतुतावच्छेदकसंबन्धेन संबन्धि हेतुप्रतियोगिकसंबन्धानवच्छिन्नत्वलाभेन प्रकृते हेतुतावच्छेदकसंबन्धेन संबन्धिद्रव्यं तत्प्रतियोगिकातिरिक्तस्य स्वरूपादेः संसर्गस्य प्रसिद्धतया तदवच्छिन्नावच्छेदकताकसाध्यवद्वृत्तित्वाभावस्य ' द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादावेव प्रसिद्धत्वादिति । एवंच न किंचेत्यादिदीधितिग्रन्थोक्तदोषः । कालो घटवान् पटादित्वादावपि हेतुतावच्छेदकीभूतकालिकातिरिक्तसंबन्धेन संबन्धिघटप्रतियोगिकसमवायादिसंबन्धानवच्छिन्नत्वस्य कालिकसंबन्धेन घटवन्निरूपिततत्संबन्धावच्छिन्नवृत्तित्वप्रतियोगिकगगनत्वप्रकारकप्रमाविशेष्यत्वतदभावाधिकरणकाभावनिष्ठावच्छेद्यतानिरूपितस्वरूपसंबन्धावच्छिन्नावच्छेदकतायां प्रसिद्धत्वेन तथाविधाभावाधिकरणभिन्नत्वस्य घटत्वावच्छिन्ने वर्तमानतया लक्षणसंगतिरिति चेन्न । कालिकसंबन्धेन घटसाध्यके तेनैव संबन्धेन प्रमेयहेतुकस्थले अव्याप्तितादवस्थ्यात् । अनुय्यवच्छेदेन गगनत्ववृत्तित्वतथाविधाभावावच्छेदकत्वेपि तथाविधातिरिक्तसंबन्धावच्छिन्नत्वसत्त्वेन तथाविधसंबन्धानवच्छिन्नावच्छेदकत्वस्याप्रसिद्धत्वादिति दिक् ॥

इति कृष्णंभट्टीये सार्वभौमपरिष्कारः ॥

---

न्यायरत्नं ।

**कर्त**संबन्धावच्छिन्नवृत्त्यनवच्छिन्नत्वनिवेशायोपक्रमते—**यद्वृत्त्यादीति** ।

विदुषां कण्ठभूषायै **रघुनाथेन** निर्मिते ।
**संन्यायरत्ने** सम्पूर्तिमगमत्**पञ्चलक्षणी** ॥

इति मीमांसान्यायपञ्चाननश्रीमद्राघवाचार्यशिष्यस्य **पर्वते** इत्युपनामकस्य **रघुनाथस्य** कृतौ गादाधरीपञ्चवादटिप्पण्यां **न्यायरत्नाभिधायां**
सार्वभौमग्रन्थान्तपञ्चलक्षणी समाप्ता ॥

---

# न्यायपारिभाषिकशब्दकोशः।



**अघटकत्वम्**—१ स्वाविषयकप्रतीतिवृत्तितन्निरूपितविषयताकत्वम्।
२ तद्विषयत्वाव्यापकविषयतावत्त्वम्।

**अतिव्याप्तिः**—लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्।

**अधिकरणत्वम्**—१ यथार्थविशिष्टधीविशेष्यत्वम्।
२ विषयताविशेष इति केचन।

**अनतिरिक्तत्वम्**—स्वान्यूनवृत्तित्वकत्वम्।

**अनवस्था**—अव्यवस्थितपरम्परारोपाधीनोऽनिष्टप्रसङ्गः।

**अनवस्थितिः**—मूलवस्तुसजातीयवस्तुपरंपराकल्पनस्य विरामाभावः।

**अनित्यत्वम्**—प्रतियोगितासंबन्धेन ध्वंसवत्त्वम्।

**अनुमितिः**—व्याप्तिविशिष्टपक्षधर्मत्वविषयताशालिनिश्चयत्वावच्छिन्नप्रकारतानिरूपितकार्यत्वे सति ज्ञानम्।

**अनेकाश्रितगुणत्वम्**—स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वम्।

**अन्यतमत्वम्**—भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वम्।

**अन्यतरत्वम्**—भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वम्।

**अर्थान्तरम्**—१ प्रकृतानाकाङ्क्षितार्थाभिधानम्।
२ प्रकृतोपयुक्तार्थमुपेक्ष्यासंबद्धार्थाभिधानम्।

**अवच्छिन्नत्वम्**—१ 'इदमेतद्विशिष्टे एतत्प्रकारकम्' इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः। २ 'इदमेतद्विशेष्यकत्वादि एतत्प्रकारकं' इति वा।

**अवच्छेदः**—प्रतियोगी। क्वचित् व्याप्तिः। क्वचित् इयत्ताकरणम्। क्वचित् अवधारणम्।

**अवच्छेदकत्वम्**—१ प्रतियोग्यंशप्रकारीभूतधर्मत्वम्।
२ अनतिरिक्तवृत्तित्वम्। तच्च व्यावर्तकत्वसामानाधिकरण्य, स्वनिष्ठावच्छेदताकत्व पर्याप्तत्वसंबन्धेन यत्किंचिद्धर्मविशिष्टत्वम्।

**अवच्छेद्यत्वम्**—अवच्छिन्नवदेवास्यार्थः।

---

१ अयञ्च नित्यत्वपरिष्कारः प्रागभावानङ्गीकारपक्षे ध्वंसस्य नित्यत्वपक्षेऽपि सङ्गच्छते।

२ समानाधिकरणयोरेवावच्छेद्यावच्छेदकभावः।

३ अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वम्।

अव्याप्तिः—लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्।

अव्याप्यवृत्तित्वम्—१ स्वात्यन्ताभावसमानाधिकरणत्वम्।
२ स्वप्रतियोगित्व-स्वसामानाधिकरण्यैतदुभयसंबन्धेनाभाववत्त्वम्।

असंभवः—लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्।

आकाङ्क्षा—१ स्वरूपयोग्यत्वे सति अजनितान्वयबोधजनकत्वम्। (स्व१)
२ यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृतत-त्पदत्वम्।

आधेयता—आधेयमित्याकारकप्रतीतिनियामकधर्मविशेषः।

आहार्यम्—स्वविरोधिधर्मधर्मितावच्छेदकं स्वप्रकारकं ज्ञानम्।

उत्पत्तिः—१ स्वाधिकरणक्षणावृत्तिध्वंसप्रतियोगिक्षणसंबन्धः।
२ स्वाधिकरणक्षणध्वंसानधिकरणक्षणसंबन्धो वा तदधिकरणक्षणावृत्ति-त्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वम्।

उत्सर्गः—स्वानुयोगिकव्याप्यवस्तुप्रतियोगिकसंबन्धविरहेच्छा।

उपलक्षणम्—विवक्षितान्वयप्रतियोगितानवच्छेदकत्वे सति व्याव-र्तकत्वम्।

उपायः—साक्षात् परंपरया वा यत्किंचित्कार्यजनने समर्थः।

एकत्वम्—स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वम्।

एकैकवृत्तिगुणत्वम्—स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगि-गुणत्वम्।

औपपत्तिकत्वम्—व्याप्तिग्रहोपायप्रतिपादनघटकोपायविषयकप्रतिपत्तिप्रयो-जकत्वम्।

कर्मधारयः—क्रमिकपदार्थयोरेकस्य धर्मिणि तादात्म्येनापरस्यान्वयोऽर्थद्वा-न्वयबोधं प्रति समर्थः।

कादाचित्कत्वम्—सत्त्वे सति किंचित्कालवृत्त्यभावप्रतियोगित्वम्।

कालोपाधिः—१ क्षणदिनादिव्यवहारविषयत्वनियामको धर्मः।
२ क्रिया३मात्रं वा।

---

१ अत्र स्वपदेन देवदत्तादेर्ग्रहणम्।

२ साकाङ्क्षत्वं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदक-रूपेण ज्ञेयम्।

३ (१) स्वजन्यविभागप्रागभावावच्छिन्नं कर्म। तदर्थश्च स्वं (रविक्रिया) तज्जन्यो विभागः (रविपूर्वदेशयोर्विभागः) तस्य प्रागभावः (स तादृगक्रि-योत्पत्तिकाले तिष्ठति) तदवच्छिन्नं (तदेव कर्म) इति।

(२) पूर्वसंयोगावच्छिन्नविभागः। स च स्वजन्यविभागनाश्यपूर्वसंयोगवि-शिष्टः स्वजन्यविभागः।

केवलान्वयित्वम्—असद्विपक्षत्वम् ।

ग्रन्थः—एकार्थप्रतिपादकवाक्यसन्दर्भः ।

ग्रहः—सामान्यसंबन्धावच्छिन्नप्रकारतानिरूपितप्रकारतासमानाधिकरणगुणत्वव्याप्यजातिमत्त्वम् ।

घटकत्वम्—१ तद्विषयताव्यापकविषयताकत्वम् ।

२ (ख) स्वभिन्नत्व—स्वव्यापकत्व एतदुभयसंबन्धेन विषयताविशिष्टविषयताकत्वम् ।

चरमत्वम्—१ स्वसजातीयपदार्थप्रागभावानधिकरणत्वम् ।

२ स्वेतरभावकारणानपेक्षकार्यकत्वम् ।

तत्पुरुषः—१ स्वघटकैकपदार्थनिष्ठद्वितीयाद्यर्थावच्छिन्नापरपदार्थबोधकसमासत्वरूपधर्मवत्त्वम् ।

२ समासप्रयुक्तलक्षणाशून्योत्तरनामकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामकसमासः ।

तद्व्यक्तित्वम्—तत्तत्तादात्म्यविशिष्टधर्मः ।

तर्कः—अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहः ।

द्वित्वम्—१ अपेक्षाबुद्धिविशेषविषयत्वम् ।

२ अपेक्षाबुद्धिजन्यो गुणविशेषः ।

निराकरणम्—तत्तद्विषयकज्ञाने संशयस्य अप्रामाण्यव्यावर्तकव्यापारः ।

निरूपकत्वम्—१ स्वरूपसंबन्धविशेषः ।

२ तज्ज्ञानजनकज्ञानविषयत्वम् ।

निरूपणम्—१ ज्ञानानुकूलशब्दप्रयोगः ।

---

(३) पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावः । तत्र स्वजन्यविभागजन्यपूर्वसंयोगनाशावच्छिन्नः स्वजन्योत्तरसंयोगप्रागभावः ।

(४) उत्तरसंयोगावच्छिन्नं कर्म च स्वनाशक उत्तरसंयोग इत्यर्थः । अनेनोपाधिचतुष्टयेन क्षणचतुष्टयव्यवहार उपपद्यते । एवं क्षणान्तरव्यवहारनियामकं कर्मान्तराद्यूह्यम् । महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदा सोऽन्यतमध्वंसेनैव उपपादनीय इति ।

१ इदं प्रशस्तपादे ।

२ कारणोपपत्तित ऊह इति लक्षणम् । अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम् ।

३ इदं तु व्यासज्यवृत्ति । पर्याप्तिसम्बन्धेन द्वयोरेव द्रव्ययोस्तिष्ठति ।

४ इदं स्वरूपसम्बन्धेन पदार्थमात्रे तिष्ठति ।

२ लक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानजननानुकूलव्यापारः ।

३ परमतनिराकरणपूर्वकसिद्धान्तकथनम् ।

निरूपितत्वम्—स्वरूपसंबन्धविशेषः ।

तज्ज्ञानजनकज्ञानविषयत्वम् ।

निर्णयः—१ तद्भावाप्रकारकं तत्प्रकारकं ज्ञानम् ।

२ विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणम् ।

निश्चयः—१ तदभावप्रकारतानिरूपिततत्प्रकारतानिरूपितविशेष्यताशालिज्ञानम् ।

२ तद्वद्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानम् ।

निष्पन्नत्वम्—अतीतवृत्तिविषयत्वम् । अतीतत्वं च स्वाधिकरणकालवृत्तिकृतिजन्यक्रियाजन्यफलानुकूलव्यापारानुकूलत्वविशिष्टप्रतियोगित्वसंबन्धेन वर्तमानध्वंसविशिष्टत्वम् ।

परीक्षा—परमतनिराकरणपूर्वकस्वमतस्थापनम् ।

(ख) यथालक्षितस्यैतल्लक्षणमुपपद्यते न वेति विचारः ।

पुनरुक्तिः—अनुवादादन्यत्वे सति निष्प्रयोजनं पुनरभिधानम् ।

प्रतिपादनम्—प्रतिपत्तिजननानुकूलशब्दप्रयोगः ।

प्रतियोगित्वम्—१ स्वरूपसंबन्धविशेषः ।

२ निरूपकत्वम् ।

प्रतियोगितावच्छेदकः—१ येन रूपेण यस्याभावादौ प्रतियोगिता बोध्यते स धर्मः ।

२ येन संबन्धेन प्रतियोगिताया अभावादौ भानं स संबन्धः ।

प्रतिसंधानम्—अनुचिन्तनम् ।

प्रतीक्षा—भविष्यत्काले कर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारः ।

प्रामाण्यम्—तद्विशिष्टविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वम् । विशेष्यतावच्छेदेन तद्धर्मावच्छिन्नप्रकारतासंबन्धेन तद्धर्मवत्त्वं तत्संबन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रतियोगिकसंबन्धावच्छिन्नप्रकारकज्ञानत्वम् ।

---

१ इदं जल्पवितण्डामधिकृत्योक्तम् ।

२ संशयभिन्नज्ञानमिति सर्वेषां सिद्धान्तः । निश्चयत्वं न जातिः, प्रत्यक्षत्वादिना साङ्कर्यात् । किंतु विषयताविशेषः ।

३ महानसोऽयं वह्निमान् यथा पर्वतो वह्निमान् इत्यत्र नातिप्रसङ्गः ।

४ स च क्वचिदेकः क्वचिदनेकः । तत्र वह्निर्नास्तीत्यादौ वह्नित्वमेकम् महानसीयवह्निर्नास्तीत्यादौ महानसीयत्वं वह्नित्वं चेत्युभयम् ।

अनधिगतार्थग्राहित्वमिति मीमांसकाः ।

प्रयोजकत्वम्—तद्भिन्नान्यथासिद्धिभिन्नान्यथासिद्धिशून्यत्वे सति कार्याव्यवहितपूर्ववृत्तित्वम् ।

बहुव्रीहिः—नियमतः समासप्रयुक्तलाक्षणिकोत्तरनामकसमासः ।[1]
अन्यपदार्थप्रधानो बहुव्रीहिरिति शाब्दिकाः ।

महाकालः—अनवच्छिन्नः कालः, उपाध्यनवच्छिन्नः कालः ।

युक्तिः—साधकबाधकप्रमाणोपन्यासः ।
अनुमानं तच्च साध्यसाधकलिङ्गज्ञानम् ।
न्यायः[2] इति मीमांसकाः ।

लघुत्वम्—शीघ्रोपस्थितिजनकत्वम् ।

लक्षणम्—१ यो धर्मो लक्ष्ये व्याप्य वर्तते न वर्तते चान्यत्र स धर्मः ।
२ लक्ष्यतावच्छेदकसमनियतत्वम् ।

लक्षणा—स्वाशयसंबन्धः ।
शब्दनिरूपितोऽर्थनिष्ठशाब्दबोधप्रयोजकः शब्दार्थसंबन्धः ।

विकल्पः—द्वैविध्यम् ।

विग्रहः—वृत्त्यर्थावबोधकं वाक्यमिति केचन । समासादिवृत्तिसमानार्थकवाक्यविशेषः इति वैयाकरणाः ।

विनिगमकम्—अन्यतरपक्षपातिनी युक्तिः ।

विशेषणम्—स्वरूपसंबन्धरूपः सन्निकर्षविशेषः ।
प्रकारताख्यो विषयताविशेषः ।

वैयधिकरण्यम्—१ तदनधिकरणवृत्तित्वम् ।
२ तदधिकरणावृत्तित्वम् ।

वैशिष्ट्यम्—संबन्धः यस्य यत्र यः संबन्धः स एव तत्र तस्य वैशिष्ट्यम् ।

व्यभिचारः—कार्यकारणभावभङ्गः ।

व्यवस्था—१ मर्यादा । सा च शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापनम् ।
२ स्वोऽभिधेयापेक्षावधिनियम[3] इति वैयाकरणाः ।

---

१ राजपुरुष इत्यादिवारणाय उत्तरेति नामविशेषणम् । अर्धपिप्पलीत्यादितत्पुरुषवारणाय नियमतः इति पदम् । तत्पुरुषे तु न नियमतः ।

२ न्यायो नाम श्रुत्योः परस्परविरोधे निर्णायकप्रमाणम् ।
"श्रुत्योर्विरोधे न्यायस्तु बलवानर्थनिर्णये ।
युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥" इति ।

३ तदर्थश्च दिग्देशकालैरवधिनियममेदरूपत्वम् ।

व्यापकत्वम्—यन्निरूपितसाध्यतावच्छेदकताघटकसम्बन्धसामान्ये प्रतियोगितावच्छेदकतावच्छिन्नप्रतियोगिताकाभाव तदन्यत्वम्।[1]

व्यापकत्वम्—१ तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्।

२ तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वम्।

३ निरवच्छिन्नप्रतियोगितानधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्व एतदुभयाभाव तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वम्।[2]

व्याप्ति—अनौपाधिक सम्बन्ध। अनौपाधिकत्व तु यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगिकात्यन्ताभावासमानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावासमानाधिकरणसाध्यसामानाधिकरण्यम्।

व्यासज्यवृत्तित्वम्—स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वताद्रूप्यतदुभयसम्बन्धेन यत्किंचित्पदार्थविशिष्टत्वम्।

व्युत्पत्ति—शाब्दजन्यशाब्दबोधज्ञानादिसपादकसंस्कारविशेष।

सम्बन्ध—स्वभिन्नसम्बन्ध्याश्रितस्वभिन्नप्रतियोगिक पदार्थ।

संसर्गमर्यादा—समभिव्याहारज्ञानकार्यतावच्छेदककोटिप्रविष्टसम्बन्धता।

समनियतत्वम्—व्याप्यत्वे सति व्यापकत्वम्।

समानाधिकरत्वम्—वर्तमानकालवृत्तिध्वंसप्रतियोगिसमानाधिकृतिविषयत्वम्। वर्तमानकालवृत्तिध्वंसप्रतियोगिप्रमाणताविशेषकस्वविषयकृतिध्वंसासमानकालीनस्वविषयककृतित्वम्।

मुसदीयत्वम्—१ अनेकपर्याप्तो धर्म।

२ त्रित्वादिपर्याप्तसंख्याविशेष।

सामानाधिकरण्यम्—१ प्रतियोगितासम्बन्धेन तद्वदनुयोगिकत्वम्।

२ स्वावच्छेदकीभूतो य काल तदवच्छिन्ना या स्वविशिष्टनिरूपिता यत्किंचिद्व्याप्तिनिष्ठाऽधेयता सा।[4]

सुषुप्ति—पुरीतता मन संयोग।

स्वरूपम्—स्वभावविशेष।

स्वात्मक पदार्थ।[3]

---

१ इद प्रतियोगिताव्यापकत्वम्।

२ इद साध्यस्य हेतुव्यापकत्वम्।

३ प्रत्येकातिरिक्त इति नैयायिकसिद्धान्त।

४ इद एकक्षणावच्छिन्नसामानाधिकरण्यम्।

# तर्कसंग्रहचन्द्रिका

## तर्कसंग्रहसहिता ।

इयं व्याख्या गभीरार्थापि सुन्दरतरास्ति । अस्याः प्रणेता श्रीकाशीस्थः शब्द्यो विद्वान् महामहोपाध्यायप्रतिभो गाडगिलोपाह्व श्रीमुकुन्दशर्मासीदिति विज्ञायते । बालाल्पमतिदुरवबोधविषयचित्रपथिषुणानेन व्याख्याना महता परिश्रमेण व्यरचीय टीका तथा विविधटिप्पणपरिष्कृतास्तीति विद्यार्थिभिरादरणीया-

मूल्यं ६ आ., मार्ग. १ आ.

# भास्करोदया ।

## तर्कसंग्रह-दीपिका-प्रकाश(नीलकण्ठी)संवलिते-
## यमपूर्वा व्याख्या

मुद्रितास्ति । तर्कसंग्रहदीपिकाया यथावदवबोधाय यथा नीलकण्ठ्युपकरोति एवमेव नीलकण्ठ्या अप्ययथावज्ज्ञानायेयं भास्करोदयातीव माहात्म्यशालिन्यस्ति मूल्यं १४ आ., मार्ग. २ आ.

## श्रीलौगाक्षिभास्करप्रणीतः

# अर्थसंग्रहः ।

## श्रीमत्परमहंसरामेश्वरशिवयोगिभिक्षुप्रणीत-
## मीमांसार्थसंग्रहकौमुदीव्याख्यासहितः ।

अयं ग्रन्थो निखिलमीमांसापदार्थनिरूपणपरत्वेन जैमिनीयतन्त्रप्रविविक्षूणामर्थेषामत्यन्तोपकारकः सर्वो मीमांसाप्रकरणग्रन्थानतिशेते । अयमनेन प्रागेव सारमुद्रितोऽप्यशुद्धिबाहुल्यादशुद्धितश्च ग्रन्थ आसीत्सोऽस्माभिर्महता यत्नेन सुप्रसिद्धविद्वद्द्वारा संशोध्य टिप्पण्यादिभिरलंकृत्य मुद्रितोऽस्ति ।

मूल्यं १२ आणका , मार्गव्यय. २ आणकौ.

# प्रमेयकमलमार्तण्डः ।

## श्रीचन्द्रप्रभाचार्यविरचितः ।

अयं जैनदर्शनस्यापूर्वं रत्नकोटिको न्यायग्रन्थोऽस्ति । श्रीमाणिक्यनन्द्याचार्यप्रणीतस्य परीक्षामुखनाम्नः सूत्रग्रन्थस्य वृत्तिरूपत्वेनायं समुत्पन्नः । अयं श्रीभोजराजकालीनोऽस्य प्रणेतासीदित्यनुमानतोऽयमत्र ८०० नवशतक ९०० परिमितकालेऽस्य जन्मन आसीदिति निर्णीयते ।

मूल्यं ४ रु., मार्ग. ८ आ.

निर्णयसागरयन्त्रालयाधिपति

पाण्डुरङ्ग जावजी,
कालबादेवीरोड, मुंबई.